# नियमाः

१—इयं त्रैमासिकी संस्कृतपत्रिका मार्गशीर्ष-फाल्गुन-ज्येष्ठ-भाद्रपदमासेषु प्रकाश्यते । वर्षारम्भो मार्गशीर्षमासाद् गण्यते ।

२—ग्राहकत्वं स्वीकुर्वाणस्य शुल्कं पूर्णवर्षस्यैव गण्यते । मध्येवर्षं ग्राहकत्वं भजतोऽपि समग्रवर्षस्यैव तद् भवेत् । तादृशाय ग्राहकाय वर्षस्य पूर्वभागे प्रकाशिता अङ्का उपलब्धौ सत्यां प्रेषयिष्यन्ते ।

३—ग्राहको यदि स्थानपरिवर्तनं कुर्यात् तर्हि नवीनसङ्केतं निर्दिशेत् कार्यालयाय ।

४—वार्षिकं शुल्कं दशरूप्यकाणि तथा एकस्याङ्कस्य रूप्यकत्रयं वर्तते । शुल्कमिदं धनादेशद्वारेण प्रेषणीयम् ।

५—विमर्शात्मका अनुसन्धानात्मकाश्च शास्त्रीया अप्रकाशितपूर्वा उच्चस्तरीया गभीरा मौलिकनिबन्धाः प्रकाशनाय गृह्यन्ते ।

६—काव्य-नाटक-चरित्रवर्णन-व्यङ्ग्य-हास्यसम्बद्धा नव्याः कृतयोऽत्र स्थानं न लभन्ते ।

७—प्रकाशनाय प्रेषिताः सर्वविधा एव रचना एकस्मिन् पत्रपृष्ठे सुस्पष्टाक्षरैर्लिखिताः टङ्किता वा स्युस्तथा लेखान्ते लेखकस्यावाससङ्केतः पदनिर्देशश्चोल्लिखितौ भवेताम् ।

८—अस्वीकृता रचनाः पोस्टविभागीयचिटिका( टिकट )-प्राप्त्यनन्तरं प्रत्यावर्तयिष्यन्ते ।

९—लेखकेभ्यस्तल्लेखानां पञ्च उन्मुद्रितयोऽपि प्रदास्यन्ते ।

१०—लेखानां प्रकाशनस्य सम्पादनस्य च सर्वाधिकारः सम्पादकायत्तः ।

११—परिचयप्रकाशनाभिलाषुकैः प्रकाशकैर्लेखकैर्वा नवीनकृतीनां द्वयी प्रेषणीया ।

१२—पत्रिकासम्बद्धः सर्वविधपत्रव्यवहारः धनादेशद्वारेण शुल्कप्रेषणञ्च 'व्यवस्थापकः—परमार्थसुधा' इति सङ्केतेन कर्तव्यं तथा स्वस्य नामावाससङ्केत-पदनिर्देशाः सुस्पष्टं लेख्याः ।

★

# परमार्थसुधा

( त्रैमासिक-संस्कृत-पत्रिका )

वर्षः पञ्चमः ❋ अङ्कश्चतुर्थः

आषाढ-श्रावण-भाद्रपदमासाः

संवत्सरः – २०३८

सम्पादकः

श्रीसत्यनारायणशर्मा

सहसम्पादकौ

श्रीवासुदेवद्विवेदीशास्त्री—श्रीविद्याधरद्विवेदी

प्रकाशकः

**श्रीसोहनलालः**

मन्त्री, परमार्थन्यासः

मुड्हू, राँची ( विहार )

•

प्राप्तिस्थानं, पत्र-लेख-मूल्यादि-प्रेषणसङ्केतश्च-

व्यवस्थापकः – परमार्थसुधा

सार्वभौम-संस्कृत-प्रचार-कार्यालयः

डी० ३८।११०, हौजकटोरा, वाराणसी

( उत्तर-प्रदेशः ), दूरभाषः – ६६०२१

•

वार्षिकं मूल्यम्–दश रूप्यकाणि

विदेशेषु – दश डालराणि

•

मुद्रकः

बैजनाथ प्रसाद

**कल्पना प्रेस**

रामकटोरा रोड, वाराणसी ।

# विषया लेखकाश्च

## परमार्थसूक्तयः

### सरस्वती-देव्याः प्रसादनम्

पावका नः सरस्वती, वाजेभिर्वाजिनीवती । यज्ञं वष्टु धियावसुः ॥१॥
चोदयित्री सूनृतानां, चेतन्ती सुमतीनाम् । यज्ञं दधे सरस्वती ॥२॥
महो अर्णः सरस्वती, प्रचेतयति केतुना । धियो विश्वा विराजति ॥३॥
शिवा नः शंतमा भव, सुमृडीका सरस्वति । मा ते युयोम संदृशः ॥४॥
यस्ते स्तनः शशयो यो मयोभूर्, यो रत्नधा वसुविद्यः सुदत्रः ।
येन विश्वा पुष्यसि वार्याणि, सरस्वति तमिह धातवे कः ॥५॥
सरस्वतीं देवयन्तो हवन्ते, सरस्वतीमध्वरे तायमाने ।
सरस्वतीं सुकृतो अह्वयन्त, सरस्वती दाशुषे वार्यं दात् ॥६॥
यदाशसा वदतो मे विचुक्षुभे, यद्याचमानस्य चरतो जनाँ अनु ।
यदात्मनि तन्वो मे विरिष्टं, सरस्वती तदा पृणद् घृतेन ॥७॥

—ऋग्वेदात्-अथर्ववेदाच्च

## विद्वन्मोदावहा सूचना

संस्कृतविदुषां कृतेऽभूतपूर्वमवदानम्

शर्मण्यदेशीयाकाशवाणीतः प्रसारितानां श्रीमदाचार्य-सत्यनारायण-शर्मणः संस्कृतप्रवचनानां सङ्कलनात्मकस्य प्रवचनपराग इति ग्रन्थरत्नस्य प्रकाशनविषयिणी या सूचना पूर्वं प्रदत्ताऽऽसीत्, संस्कृतजगतः सौभाग्या-सम्प्रति प्राकाश्यं गतोऽयं बहुमूल्यो ग्रन्थः पञ्चत्रिंशद्रूप्यकमूल्येन चौखम्भा विश्वभारती, चौक, वाराणसी इति सङ्केतेन च लब्धुं शक्यते ।

—व्यवस्थापकः

# वर्धमानस्य गणरत्नमहोदधिमुद्दिश्य प्रतीचीनपरामर्शनम्

श्रीसत्यनारायणशर्मा

व्याकरणशास्त्रमन्तराऽपरशास्त्राणामधीतिस्तु प्रायशो वैयर्थ्यं भजते, यतो हि पदानां सम्यगर्थावगमस्तु व्याकरणकोशाभ्यां खलु सम्पद्यते। ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्चेत्यस्मिन्नुपदेशे शब्दशास्त्राधीतेर्माहात्म्यं भाष्यकृता समुद्घोषितम्। ननु प्राक्कालिकमुनीनामेतद्विषयकान् ग्रन्थानवबोद्धुमद्यतना धिषणा कथं प्रभवेत् सुरभारत्याः प्रयोगस्य ग्रन्थेषु परिमितत्वात्! पाणिनीयव्याकरणे व्याहृतानां गणानां सम्यगवधारणस्य अनीषत्करत्वं कालयोगाद् यदि बहूनां विदुषां चेतो दुनोति तर्हि किमत्र विस्मयावहम्! शालातुरीयेन मुनिना स्वोपज्ञे सूत्रग्रन्थे द्विविधा गणाः स्मृताः। धातुगणः शब्दगणश्चेति विदितमेव समेषां व्याकरणावलोकनपराणाम्। ऊनविंशशत्या मध्ये प्रकाशिता धातुगणविषयिका वेस्टरगार्डस्य कृतिः संस्कृतसमाराधनमनस्कानां महान्तमुपकारं विदधे। तदनु व्याकरणविदुषा एग्गलिङ्गेन सम्पादितो वर्धमानस्य गणरत्नमहोदधिस्तु रसगुणनवचन्द्रमिते वैक्रमाब्दे प्रकाशतामास्वाऽभावं यथाकथञ्चित् पूरयमाणः जगति संस्कृतनिष्ठान् भृशं तोषयाञ्चक्रे।

ऊनविंशशत्यां साधनानामनुपलब्धिरनुसन्धानकार्येऽभिनिविष्टचेतसां एग्गलिङ्गादीनां विदुषामुत्साहं शिथिलीकर्त्तुं नो शशाक। तालपत्रेषु कागदेषु च लेखिताः पाण्डुलिपीरधिगत्य अप्रतिहतमनाः शब्दार्णवं तरीतुं वैयाकरणसौविध्यसम्पादनार्थमेग्गलिङ्गाभिधोऽनुसान्धाताऽसौ अहर्निशं कार्ये व्यापृतवान्। तस्य चिकीर्षितस्य गरिमाणं, कष्टसाध्यताञ्च कः खलु सुधीः प्रत्यादिशेत्! गणरत्नमहोदधेरद्भुतं महत्त्वं सर्वतः प्रथमं गोल्डष्टूचूकराभिधो व्याकरणशास्त्रे निष्णातोऽध्यापको भगवन्तं पाणिनिं संस्कृतवाङ्मये तस्य स्थानञ्चोद्दिश्य प्रणीते निबन्धे प्रतिपादयाञ्चकार। तिस्रः पाण्डुलिपयस्तस्य सविधे आसन्। गोल्डष्टूचूकराद् ब्यूलराभिधादपरसंस्कृताध्यापकात् पाण्डुलिपीरवाप्य बहूनां जर्मनदेशीयसंस्कृतविद्यावतां सहयोगमेग्गलिङ्गः प्राप्तवान्। अभ्यर्हिते कार्येऽस्मिन् बहुविघ्नसङ्कुले आउफरेख्टः, स्तेंत्सलरः, वेबरः रोथः, पिशेलः, हासः, कीलहोर्नः, बटलिङ्कश्च साभिनिवेशं साहाय्यं विदधिरे। भट्टयज्ञेश्वरस्य गणरत्नावलिरपि कृच्छ्रलभ्ये चिकीर्षितेऽस्मिन्नसौकर्यं किञ्चिल्लघूचकार।

गणरत्नमहोदधे रचनाकालमधिकृत्य न कोपि प्रश्नः ग्रन्थावसाने विद्वदग्रणीर्ग्रन्थकारः स्वयमेव कालं निरदिक्षत् ।

किंचित्क्वचित्कथंचिद्रचितं पद्यानुसारतोऽस्माभिः ।
सुन्दरमसुन्दरं वा तल्लक्ष्यं सहृदयैरेव ॥
सप्तनवत्यधिकेष्वेकादशसु शतेष्वतीतेषु ।
वर्षाणां विक्रमतो गणरत्नमहोदधिर्विहितः ॥

पद्यानुसारत इत्यस्य स्थाने पाद्यानुसारत इति पाठोऽपि लभ्यते ।

दिगन्तलब्धकीर्त्तेरमरकोषस्य भाष्यकृत् क्षीरस्वामी वर्धमानस्य विद्योपासने विशिष्टं स्थानमुपेयायेति आउफरेख्टः प्रथमभ्युपगतः । भूयशः क्षीरस्वामिनः पंक्तीः वर्धमानः स्वग्रन्थे विनिवेशितवान् । अपरञ्च अनल्पसंख्यकानां ग्रन्थकाराणां निर्देशान्नानाविधेभ्य उद्धरणेभ्यश्चात्र ऐतिह्यविषयिका अनर्घा सामग्री अवाप्यते । अजयोऽजितदेवाचार्यः कालिदासः, कुमारिलो, जयादित्यो, जिनेन्द्रबुद्धिर्धनञ्जयः, परिमलः, सागरचन्द्रः, सुधाकरः अन्ये च वर्धमानेन स्मृताः सन्ति । अनर्घराघवं, कादम्बरीं, वेणीसंहारं, जाम्बवतीहरणं, त्रिभुवनमाणिक्यचरितं, कातन्त्रं, प्रियदर्शिकां, राजशेखरस्य बालरामायणमन्यान्यपि काव्यानि विपश्चिदसौ अध्येतृहितकाम्यया उपयुयुजे । वर्धमानो न केवलं व्याकरणे निष्णातबुद्धिरासीत् तेन साल्ङ्कारं काव्यमपि कृतम् । द्वितीयाध्यायस्य सप्तनवतितमं श्लोकं व्याख्यास्यमानोऽसौ स्वरचितं श्लोकं प्रस्तवीति ।

निःसीमाश्चर्यधाम त्रिभुवनविदितं पत्तनं यत्त्वदीयं
तन्मध्ये वृद्धिमीयुः फलभरनमिताः शाखिनश्चूतमुख्याः ।
नैतच्चित्रं विचित्राद्विहितकृतयुगस्त्वत्प्रभावात् क्षितीश
प्रादुःषन्ति प्रभूता यदि सुरतरवश्चित्रमेतद्बुधानाम् ॥

प्रादुः प्राकाश्य इति विशदीकरणार्थं श्लोकोऽयं समुद्धृतः । एवमेव षट्चत्वारिंशदधिकशततमे श्लोके वलाहको मेघः, मनस इष्टं मनीषितञ्चेत्यर्थौ विशदीकुर्वन् स्वरचितौ श्लोकौ उद्धरति, यथा ममैव, यथा वा ममैव इति शब्दैः ।

मतिमतां मधुरं कवितामृतं ददति मन्त्रिललाम वलाहके ।
विदधती निखिलार्थविवेचनं जयति कल्पलता चिरदीधितिः ॥
दूरादपि रिपुलक्ष्म्यो मनीषितं यन्त्रयन्ति सावेगाः ।
अब्धिमिवेतरभूभृन्निरुद्धगतयोऽपि कूलिन्यः ॥

वर्धमानेन बहुसंख्यकानि व्याकरणसूत्राणि निरदेशिषत । ननु कुतः सन्ति सूत्राणि इमानि ? आचार्यबटलिङ्कस्तु गणरत्नमहोदये रचनाकारः कस्यचिदपरव्याकरणग्रन्थस्य अधीतिमललक्षन्न तु

पाणिनीयमिति मतमभ्युपेतः। एगलिङ्गोऽपि एवमेव विभावयामास। आचार्यगोल्डष्टच्करस्य मतन्तु भिन्नम्। ग्रन्थारम्भे शब्दशास्त्रपारदृश्वानो वैयाकरणाः स्मर्यन्ते। शालातुरग्रामाभिजनं पाणिनिं, शालातुरीय इति शब्देन, शाकटायनं शकटाङ्गज इति शब्देन स्मृत्वा चन्द्रगोमिनं, दिग्वस्त्रं, वाक्यपदीयप्रकीर्णकयोः कर्तारं भर्तृहरिं, वामनं, सरस्वतीकण्ठाभरणरचयितारं भोजं ग्रन्थकर्ताऽस्मार्षीत्। मुख्यशब्दाच्छित्रस्वामी, पतञ्जलिः, कात्यायनोऽन्ये च स्मृताः। अर्वाक्कालिकवैयाकरणेषु श्रीभद्रेश्वरसूरेरौत्कर्ष्यमभ्युपपद्यते। इति शुभं भूयात्।

( २ )

वर्धमानस्य गणरत्नमहोदधिग्रन्थकर्त्तुः कूलङ्कषं वैदुष्यन्तस्य वाचोयुक्तिश्च प्रख्यापयतीति न कोऽपि सुधीः प्रत्यवतिष्ठते, किन्तु पाणिनेरभिमतं कृत्स्नं गणशब्दकदम्बकं याथातथ्येन तेनाभिहितमिति मन्तुं मनो नोत्सहते, उभयोः कालव्यवधानस्यातिमात्रदैर्घ्यात्। पाणिनेर्युगे, अनतिदीर्घकालव्यवहितो वाऽनूचानः कश्चिद् गणशब्दसन्दोहं यथातथं निर्दिष्टवानिति सम्भाव्यते। गणेषु पृथुकाये बहुशाखे संस्कृतसाहित्येऽद्यत्वेऽनुपलब्धाः शब्दा अपि विद्यन्ते, येषामर्थावबोधोऽसुकरः। पातञ्जलमहाभाष्यादपि सन्दर्भेऽस्मिन् सर्वत्र काठिन्यमपोह्यत इति चेन्न। अर्धर्चादिगणेऽर्धर्चामतिरिच्य केवलं कार्षापणगोमयसरकानां निर्देशात् त्साखारिए यदि स्खलितमनोरथोऽभूत्तर्हि किमाश्चर्यम्। प्रतीच्ये जगति प्रथममाचार्यबटलिङ्केन तदनु गोल्डष्टच्कराभिधेन व्याकरणविदुषोपवर्णितस्य गणरत्नमहोदधेः प्रकाशनादसौ मुदमन्वभूत्।

एकतस्तु द्वादशशतके ग्रन्थममुं विपश्चित्पश्चिमो वर्धमानो जग्रन्थ, अन्यतस्तु पाणिनीयव्याकरणमसौ नैव लक्षयाञ्चकार। तर्हि पाणिनेः गणपाठः कथमवबुध्येत! पारम्परीणेऽध्ययनप्रवाहे प्रश्नस्यास्य समाधानमन्वेष्टुं व्याकरणविदो यतन्ते। आचार्यत्साखारिए तु सन्दर्भेऽस्मिन् सन्दिहानस्तस्थौ। पुरातनग्रन्थेषु काशिकादयः पाणिनियुगीनगणपाठमाविष्कुर्वन्तीति मन्वानानां कृतेऽर्वाग्भवैर्व्याकरणप्रणेतृभिरनुमता गणयोजना नूत्नां प्रह्वशीकामुपस्थापयति। एतत्सम्बन्धिपारम्परीणज्ञानं प्रत्यश्रद्दधान आचार्यत्साखारिए तु प्रथमं शब्दं विहाय गणपाठस्य शब्दानां पाणिनीययुगे प्रचलनं स्म संदेग्धि। ननु गणरत्नमहोदधेस्तर्हि कोऽर्थः? निष्प्रयोजनं बभूव किमनुसन्धातॄणां कृतेऽयं प्रयासः?

अत्रोच्यते। ग्रन्थोऽयं नैजं महिमानं बिभर्त्ति। आचार्यगोल्डष्ट्यूकरः संस्कृतशब्दाभिधानप्रणयनेऽमुं सयत्नमुपयुयुजे। कोषप्रणेतॄणां कृते कृतिरियं गुर्वर्थास्ति। गणकोषरचयिता वर्धमानोऽत्र व्याकरणदृशा दुर्बोधगणशब्दान् व्याचचक्ष इति हेतोर्ग्रन्थोऽयं विदुषामादरमर्हति। शब्दार्थविशदीकरणार्थं नानाग्रन्थेभ्य उदाहरणानां प्राचुर्यमध्येतॄनुपकरोति। द्वादशशतके जनपदेष्वव्यवहृतानां पदानां सम्यगर्थं निर्धारयितुं खलु विहितो यत्नः सर्वत्रावितथं भवितुं नार्हति। काव्येभ्य उद्धृताः श्लोकाः कवयितुः शब्दार्थावगमं किल प्रकटयन्ति, न तु पाणिनीययुगस्येति हेतोः साखारिए अनुसन्धातृभ्यस्तेषां गरिमाणं संदेग्धि स्म।

गणरत्नमहोदधिः पाणिनीयं व्याकरणं नैव लक्षीकुरुत इत्याचार्यवटलिङ्क आचार्यएगलिङ्ग उभावपि अमंसाताम् । अर्वाक्कालिकः कश्चिद् वैयाकरणो वर्धमानं गणव्याख्यानार्थं प्रचोदयामास। संस्कृतशब्दाभिधानानामधीतौ अतिवाहितदीर्घकालस्य आचार्यत्साखारिएमते वर्धमानो गणयोजनां व्याकरणपरिभाषाञ्चाधिकृत्य कञ्चिदद्यत्वेऽविज्ञातं वैयाकरणप्रवरमशिश्रियत्, गणाँस्तु बहुविध-स्थानेभ्यः समचैषीत् । अमुना भोजदेवादीनां वैयाकरणानां नामान्यपि निरदेशिषत । यथा हि,

किंशुकः किंवदन्ती स्यात् किंकिरातश्च किंनरः ।
किंपुरुषोऽथ किंदासः किञ्जल्काद्या बुधैर्मताः ॥

इति श्लोकस्थपदानि स्पष्टीकृत्य 'आद्यशब्दादन्येऽपि द्रष्टव्याः । अयं च गणः श्रीभोजदेवाभि-प्रायेण' इति विशदीक्रियते । एवमेव वृन्दारकादिमतल्लिकादिखसूच्यादीनां गणानां पदानि व्याख्याय 'एतच्च गणत्रयं श्रीभोजदेवाभिप्रायेण द्रष्टव्यम् । अन्यवैयाकरणमतेन सूत्राण्येतानि' इति निरदेशि। नभ्राडादिगणश्चन्द्रदुर्गाद्यभिप्रायेणाकलितः । गणोऽयमन्यैर्नाकेन नखेन वाऽऽरभ्यते । रूपादिगणनि-रूपणप्रसङ्गे रूपादिषूत्तरपदेषु समानस्य सभावो वा भवतीत्युदाहरणैर्विशदीकृत्य चन्द्रेण साकं भोजादीनां वैयाकरणानामपि परिग्रहः कृतः । द्वितीयोऽध्यायोऽर्धर्चादिगणेनारभ्यते । गणोऽयमति-प्रमाणः । चतुर्दशमितेषु श्लोकेषु गणस्यास्य शब्दानभिधाय परिसमाप्तिश्लोके मञ्जीरनूपुरशफाणुतरण्ड-मेढ्रसंसारचूर्णवटवासरजन्तुसत्त्वकोलाहलककुभजानुभगाब्दवेषवित्तस्वभूर्जलशुनशल्लगेहैर्गणनां समाप्य व्याख्याऽरुणदत्ताभिप्रायेणैते दर्शिता इति पदैरवसीयते । शाकटायनवामनाचार्यौ पौनः पुन्येन अस्मारिषाताम् । जिनेन्द्रबुद्धेश्च मतमपि निर्दिश्यते । सुहृद्दुर्हृदौ सौहार्ददौहार्दे विशदीकुर्वता हृच्छब्देनैतयोः सिद्धिरिति वामनमतं सङ्केतितम् । 'अयं पक्षो वामनस्यापि हृद्भगेत्यत्र सुहृदो भावः सौहार्दमिति दर्शयतः सम्मतो लक्ष्यते' इति लक्षयित्वा जयादित्यस्य विचारं गणरत्नमहोदधि-कारोऽसुसूचत् । सुहृदयदुर्हृदयशब्दौ सुहृद्दुर्हृच्छब्दौ उभावेव प्रतिपन्नौ । 'ब्राह्मणादौ प्रयोगदर्श-नादयोः पाठाङ्गीकरणे वचनसामर्थ्यादेवाण् ष्यञ्च भविष्यत' इति । अत ऊर्ध्वं चन्द्रभोजयोर्मते वीक्ष्येते । तदनन्तरं पारिव्राजकसिद्धिः शाकटायनमतेन कार्यते । वैपुल्यसिद्धिर्वामनमतेन । उदाहरणानां नैयून्यं नास्त्यतोऽलमतिविस्तरेण ।

ननु विद्वत्तल्लजो वर्धमानः स्वगणकोशप्रणयनविधौ वैयाकरणं भोजमन्वसार्षीत् इति तर्कयितुं पार्यते किं, भोजस्य भूरिशः स्थलेषु मतनिर्देशात् । ग्रन्थोपक्रमे वैयाकरणानां यानि नामानि गृहीतानि किं तेषु तस्याभिधानमप्यन्वेष्टव्यं यमसौ अललक्षत् ? अपरेषां कृतविद्यानामपि ग्रन्थेषु भोजप्रणीतो व्याकरणग्रन्थः सास्मर्यते । निघण्टुभाष्यभूमिकायां देवराजयज्वा भोजराजीयं व्याकरणं सूचयाञ्चक्रे । आचार्यत्साखारिए सन्दर्भेस्मिन् भोजव्याकरणाभिधां कृतिमेकां निर्दिशति, यां विनय-सागराख्यो जैनविद्वान् भारमल्लसूनोः कस्यचिद् भोजाभिधस्य भूभृतोऽनुज्ञया रचयाञ्चकार ।

ग्रन्थेऽस्मिन् श्लोकानां सहस्रद्वयं विद्यते, सारस्वतव्याकरणेनासौ संवदति । किन्तु वर्धमानेन अपरैर्विद्वद्भिश्च निर्दिष्टं भोजव्याकरणन्तु सूत्ररूपे भवितुमर्हति ।

यं वा कं वा वैयाकरणधुरीणस्य ग्रन्थं वर्धमानः किं नोपस्तम्भं कृतवान्, यस्य वा कस्य वा पदद्वितयं स किं न सिषेवे, वाग्देवतायाः क्रमरेणुभिस्तस्य प्रतिभा प्रकर्षमियाय, शब्दानां सम्यगर्थमवजिगमिषूणां हिताय ! इति शुभं भूयात् ।

( ३ )

वर्धमानादिभिर्वदान्यैर्विद्वद्भिरुदाहृतं भोजव्याकरणं सूत्रात्मकमस्तीत्यत्र विसंवादो नास्ति । भोजाख्यस्य महीभृतः समाश्रये विनयसागराख्यो वैयाकरणो यच्छ्लोकबद्धं व्याकरणं प्रणिनाय, तस्य भूतपूर्वताऽनायासेन प्रत्यादिश्यते । वामनाचार्यस्य मतद्वयं निर्दिश्य चान्द्रभागेति शब्दं व्याचिख्यासुर्वर्धमानश्चन्द्रभाग इव भागो यस्याः सा चन्द्रभागा नाम नदीत्यत्र पाणिनिशाकटायनयोर्मतं निर्दिशन्नन्येषां चन्द्रभागाख्यगिरेः प्रभवाच्चान्द्रभागी चान्द्रभागा वेति मतमुपदर्श्य भोजव्याकरणस्य सूत्रमुदाजहार चान्द्रभागादनद्यामिति । एवमेव गड्वादिभ्यः सप्तम्यन्तः शब्दो बहुव्रीहौ समासे पूर्वं पश्चाद् वा निपततीति सोदाहरणं स्पष्टमकरोत् । द्वितीयाध्याये भोजस्य सूत्रमुल्लिखितम् । नेन्द्वादिभ्य इति । एतदनुसारं मौलीन्दुरिति पदं स्यादन्यथा तु इन्दुमौलिरपि । अन्यत्र कल्याणीप्रियः, कल्याणोस्वः, प्रियाकल्याणीक इत्यादीनि पदानि निर्दिशन् भक्तिपदप्रयोगविषयकं भोजस्य मतमुद्धृतवान् भक्तौ च कर्मसाधनायामिति सूत्रेण । तृतीयाध्याये अणोर्माषेषु माषात्परिमाण इति सूत्रद्वयं द्वानवत्यधिकशततमस्य श्लोकस्य व्याख्याने न हस्तदण्डपुष्पादिभ्य इति सूत्रं षण्णवत्यधिकशततमस्य श्लोकस्य व्याख्याने उद्धृत्य भोजस्य व्याकरणस्य सूत्रात्मकत्वं स्फुटं दर्शयाञ्चक्रे । ननु सूत्रात्मकं भोजव्याकरणमिदं किं गणरत्नमहोदधेर्विरचनार्थं वर्धमानं प्रचोदितवत् ? आचार्यत्साखारिए तु सन्दर्भेऽस्मिन् तूष्णीम्भावावलम्बनमेव हितावहम्मेने ।

व्याकरणमिदं कथम्भूतमासीदित्यूनविंशशत्यां साधनानां नैयून्येऽनुसन्धातृवर्गः परिज्ञातुं कथं शक्नुयात् ! परिभाषाप्रक्लृप्तौ पाणिनेरस्य रचयिता नातिदूरमपससर्पेति तु स्फुटमासीत् । निर्देशविशेषेषु असौ पाणिनिसरणिमुज्झित्वाऽर्वाग्भवान् वैयाकरणानशिश्रियत् । उदाहरणानां नूतनत्वं नो वीक्ष्यते । उद्वानमिति पदं व्याचिख्यासुर्वर्धमानः शाकटायनस्य मतं स्मरति । 'उत्पूर्वाद्वानेष्ट्रनप्रत्यये । उद्वानमिति शाकटायन' इति । एवमेव द्वितीयाध्याये नौषेचिकेति पदं व्याचक्षाणो वामनस्य मतं निरदिक्षत् । 'सिञ्चतीति सेचिका । नावः सेचिका । नौषेचिका काचित्स्त्री । वामनस्तु । नावं स्यति । नौषा । नौषिकेत्याह ।' वामनस्य मतं निर्दिश्य अपरेषां वैयाकरणानां पाठो निर्दिश्यते, अपरे तु नौषेचनमिति टनान्तं पठन्तीति संकेतयता । पाञ्चालापवदी वितृण्वन् वामनः खलु स्मर्यते, न तु पाणिनिः । आर्यहलमिति पदस्य स्पष्टीकरणे शाकटा-

यनं संकेतयामास । आर्येति प्रीतिषेधो हलमिति च प्रतिषेधविपादयोरिति शाकटायन एकस्मिन् स्थाने महाभाष्यमतं निर्दिश्य स्वस्य सहमतिं विज्ञाप्य अव्ययेभ्यस्तु निःसंख्येभ्योऽव्ययादाप्सुप इति । ज्ञापकाद्विभक्त्युपत्तिरिति सुधाकरस्य वचनमुदाहृतवान् । अलमति विस्तरेण ।

आचार्यएगलिङ्गो गणरत्नमहोदधौ प्रदत्तान्युद्धरणान्युद्दिश्य महान्तं श्रममकार्षीदित्यत्र संशीतेरनवकाशः । अमुद्रितेभ्यो ग्रन्थेभ्योऽपि यान्युद्धरणापि अदीयन्त तेषामपि प्रभवमसौ टिप्पणीषु असुसूचत्, पाठकान् भृशमुपाकार्षीच्च । पातञ्जलमहाभाष्याद् वाक्यपदीयाच्च गृहीतानां पंक्तीनां प्रभवान्वेषणे आचार्यकीलहोर्नः साहाय्यं विदधे । सम्पूर्णश्लोकानां प्रभवस्य अभिज्ञानं तु तावत्कृच्छ्र-साध्यं न भवति यावल्लघुव्याहृतीनाम् । प्रथमाध्यायेऽष्टमश्लोकस्य वृत्तौ यदि लेपनमेवेष्टं लिम्पति-र्नाम कोऽपर इति विद्यते । दण्डिनः काव्यादर्शाच्छ्लोकपंक्तिरियमिति अन्वेष्टुमल्पीयान् श्रमस्त्व-पर्याप्तः स्यात् । प्रथमाध्याये एकवचनमुत्सर्ग करिष्यत इति उद्धरणं महाभाष्यादस्तीत्युपलब्धेः । श्रमसाध्यतां कः खलु व्याकरणविद् प्रत्याख्यास्यति !

गणानधिकृत्य पुराकालेऽन्येऽपि पद्यग्रन्थाः सूरिभिः प्रणिन्यिर इति संभावना आचार्य-त्साखारिएदृष्टौ बलीयसी प्रतिभाति । वर्धमानः स्वयं कल्याणीप्रियः, कल्याणीसुभगः कल्याणप्रिया, कल्याणमनोज्ञा विवृण्वन् भद्रेश्वराचार्यस्य ग्रन्थाच्छ्लोकमुदाहार्षीत् ।

किं च स्वा दुर्भगा कान्ता रक्षान्ता निचिता समा ।
सचिवा चपला भक्तिर्बाल्येति स्वादयो दश ॥

भट्टयज्ञेश्वरस्य गणरत्नावलिस्तु एतद्विषयिकाऽधुनातना पद्यात्मिका कृतिरस्ति । पाणिने-र्व्याकरणं समाश्रित्य विरचितां कृतिमिमां गणरत्नमहोदधिमधीयान आचार्य एगलिङ्गो मुधैव उपयुयुजे इति चेन्न । भट्टयज्ञेश्वरो गणरत्नमहोदधे रचयितुरधमर्णतां सदाढ्यं प्रतिपादयामास, अस्य ग्रन्थस्य निर्माणे गणरत्नमहोदधिरभून्मुख्यः सहाय इत्यङ्गीकुर्वाणः । अष्टाषष्ट्यधिकाष्टशता-धिकसहस्रतमे खिस्ताब्दे मुम्बईत आर्यविद्यासुधाकर इति नाम्ना भट्टयज्ञेश्वरस्यापरो ग्रन्थः प्रकाशितो भूत्वा विद्वत्संसदि ग्रन्थकृतो यशः प्रसारयाम्बभूव । ग्रन्थोऽयमाचार्यमङ्गलदेवशास्त्रिणा पुनरपि प्रसिद्धीकृत इति विदितचरमेव विद्योपासनपराणाम् ।

गणरत्नमहोदधिं विवेचयद्भिरनुसन्धातृभिर्हेमचन्द्रस्य व्याकरणं नो विस्मर्त्तव्यम् । सौभा-ग्याद् ग्रन्थस्यास्य वृहद्वृत्तेः पाण्डुलिपिर्गणरत्नमहोदधेः सम्पादनावधौ एगलिङ्ग आप्तवान् । पाण्डुलिपिरियं सन्तोषावहाऽऽसीत् । हेमचन्द्रस्य गणानां वर्धमानोपदर्शितगणपाठैर्यत्साम्यमस्ति तदादरमर्हति । ननु वर्धमानस्तु हेमचन्द्रस्य नाम स्वीयवृत्तौ कुत्रापि न सस्मार । अतः हेमचन्द्रस्य व्याकरणेनाव्यवहितस्यामुष्य कृतेरन्वितत्वस्य सम्भावना किल निराक्रियते । कस्यचिदपरव्याकरण-कारस्य ग्रन्थमुभौ अनुसरतुरिति तर्कयितुं शक्यते ।

भवतु तावत् । वर्धमानस्य ग्रन्थो वैयाकरणानां कृतेऽनर्घो गणकोषग्रन्थोऽस्तीति विनिश्चेतुं विद्वांसः प्रभवन्ति । ग्रन्थोऽयमगतिकान् गणशब्दान्वेषकान् भृशमुपचक्रे । ग्रन्थप्रणयनहेतुं निर्दिशता वर्धमानेन यच्चिकीर्षितं ग्रन्थारम्भे प्रकटयाम्बभूवे तद् गणरत्नमहोदधिरवाप्तवानिति तु निश्चप्रचम् ।

सुखेनैव ग्रहीष्यन्ति गणरत्नानि यां श्रिताः ।
वृत्तिः सारभ्यते स्वीयगणरत्नमहोदधेः ॥ इति

सोपनिबन्धानि प्राक्कालिकैर्वैयाकरणैः प्रणीतानि शब्दशास्त्राणि सम्यगधीत्य, नानाविध-प्रयोगानुपलभ्य पद्यबन्धेन स्वविनेयैरभ्यर्थितः सन्नसौ ग्रन्थमिमं रचयामासेति प्रतिज्ञाऽपि ग्रन्थ-परामर्शने न विस्मर्त्तव्येति शम् ।



# विश्वेऽस्मिन् संस्कृता द्विधा

आचार्यमधुसूदनशास्त्री*

गोप्यं नु सन्दिशे विद्भ्यो न कूर्यां विफलं वचः।
विश्वेऽस्मिन् संस्कृता वाणी नरदेवभिदा द्विधा॥

अयि पीतपातञ्जलाः! आचान्तपूर्वापरमीमांसाशास्त्रवारिधयः! कुक्षीकृताक्षचरणकभक्षवाणीवुधाः! सांख्यसंख्यासंख्यावन्तः! योगाभियुक्ताः! विद्यादधयः! चक्रयो! विदुष्मन्तः! उप सर्वस्मिन् तत्रभवतां भवतां बिन्दुत्वम् यतः श्रेयोऽनुशासनं वाणीसमुपासिनो भवतो नु। ततस्तादृशानुशासकेभ्यः पुरस्तादेव सेसिभ्यते सविस्तरम्।

तत्र का वाक्। वागिति कः पदार्थः। तथा सा संस्कृता इति किम्। किमु असंस्कृता अपि सा। इति विचारणायां सम्प्रत्याययामि।

सृष्टेः प्रागारम्भकाले सृष्ट्यर्थं प्रकृतिं स्वामविष्ठाय सम्भवाम्यात्ममाययेति गीतादिशा आत्मीयया योगमायया सम्भवन् स भगवान् तदैक्षत इति श्रुतेरीक्षणात्मिकां बुद्धिं तनुते। तदनु एकोऽहं बहु स्यामिति सङ्कल्पते। एवं सङ्कल्पेन स्पन्दनात् कम्पनात् सर्वं जगत् कम्पनस्वरूपं लहर्यात्मकमित्यर्थः। लहरी च द्विविधा ध्वन्यात्मिका नाम शब्दात्मिका रूपात्मिका च। तत्र शब्दात्मिका सा श्रवणविवरं प्रविशति रूपात्मिका सा दर्शनपथमायाति। लहर्योश्च क्रमान्यत्वं परिणामान्यत्वे हेतुः ( यो० वि० पा० १५ ) जात्यन्तरपरिणामः प्रकृत्यापूरात् ( यो० कै० पा० २ ) इति सूत्रयोः प्रतिपादितसिद्धान्ततो रूपात्मिकायाः ध्वनिरूपशब्दात्मनि तद्विपर्ययेण शब्दात्मिकाया द्रव्यस्वरूपे परिणमनं परिवर्तनं सुशकम्।

एवं यद् द्रष्टव्यं तच् श्रोतव्यं यच् श्रोतव्यं तद् द्रष्टव्यम्। यथा आत्मा वा अरे द्रष्टव्यः श्रोतव्यः इति श्रुतौ द्रष्टव्योऽपि आत्मा श्रोतव्यः, श्रोतव्योऽपि आत्मा द्रष्टव्य इति। शब्दो वा भवतु अर्थो वा भवतु, द्रष्टव्यत्वं श्रोतव्यत्वञ्चोभयमुभयत्र। अत एव शब्दार्थयोस्तादात्म्यमभेद इति प्रसिद्धो राद्धान्तः शाब्दिकानाम्।

---

* भूतपूर्वः साहित्यविभागाध्यक्षः काशीहिन्दूविश्वविद्यालयीयप्राच्यविद्याधर्मविज्ञानसङ्कायस्य।

तत्रायं शब्दः वाग् हि ब्रह्म वाग् वै ब्रह्म इति श्रुत्योः ब्रह्मैव । अत एवोद्घुष्यते—

द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परश्च यत् ।
शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥

इदं शब्दाख्यं ब्रह्म, तत्त्वमसि इति श्रुतौ तत्पदवाच्यम् । तच्च त्यच्च इति श्रुतेः । तनु विस्तारे इति धातोः कर्तरि क्विपि तत् इति सिद्धः प्रयोगः । अस्यार्थः विस्तारवत् व्याप्तिमत् । यत् सर्वेषु देशेषु कालेषु सामान्येषु विशेषेषु च वस्तुषु सर्वासु अवस्थासु व्याप्तं तद् ब्रह्म अतो ब्रह्मैव तत्पदस्यार्थः । तस्मादयं शब्दः सर्वत्रानुस्यूतः व्यापकः सर्वविषयाणां चिन्तने अनन्यः उपायः । तं विना चिन्तनमेव दुःशकम् । यदि शब्दो न स्यात् तदा जगति आन्ध्यं प्रसज्येत चिन्तनकार्यमधिकमग्रेसर्तुं न प्रभवेत् । शब्दाख्यं शास्त्रमेव चिन्तनं प्रसूते । यो यस्यां वाण्यां कुशलः तस्य तस्यामेव वाण्यां चिन्तनं भवतीति श्रुतिस्मृतियुक्तिस्वानुभूतिभिः सिद्धम् । यस्माज्ज्ञानमेव शब्दरूपेण परिणमते यदुक्तम्—

वायोरणूनां ज्ञानस्य शब्दत्वापत्तिरिष्यते । अत एव न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते । अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते इति अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि ।

अस्त्वेवं शब्दः ब्रह्म । परन्तु ब्रह्म अखण्डं शब्दश्च इयं प्रकृतिः अयं प्रत्यय इति प्रकृति-प्रत्ययविभागवान् । तत्रापि न केवला प्रकृतिः प्रयोक्तव्या न च केवलः प्रत्ययः इति समयमुल्लंघते च सः । यत्र प्रकृतिनिमित्ता प्रत्ययनिवृत्तिस्तत्र अप्रत्ययिकायाः प्रत्ययरहितायाः केवलायाः प्रकृतेः प्रयोगो भवति यथा सम्प्रति, अग्निचित् सोमधुक् इति । यत्र च प्रत्ययनिमित्ता प्रकृतिनिवृत्तिस्तत्र अप्रकृतिकस्य केवलस्य प्रत्ययस्य प्रयोगो भवति । यथा अधुना इयान् इति । एवं सखण्डः सः ।

ब्रह्म एकरूपम् शब्दस्तु ध्वनिर्वर्णाः पदं वाक्यमित्यास्पदचतुष्टयम् । इति दिशा अनेकरूपः ।

ब्रह्म निर्धर्मम् । शब्दः पुनः लोपागमादेशवर्णविकाररूपधर्मवान् । ब्रह्म केवलं शुद्धं, शब्दः पुनः अशुद्धोऽपि दुष्टोऽपि । दुष्टः शब्दः स्वरतो वर्णतो वा मिथ्या प्रयुक्तो न तमर्थमाहेति महाभाष्यमाह । इति चेदद्धा, बुबोधयामि रीयस्व ।

येयमुपरिष्टात् प्रतिद्वन्द्विताया: कथा श्राविता सा अव्यवहरणीयव्यवहरणीययोः शब्दयोर्वर्तते । इदानीं त्रैलोक्ये वा सप्तलोक्ये वा चतुर्दशभुवने वा संवसद्भिः सामान्यैर्देवैः आदित्यादिभिर्गणदेवैः विद्याधरादिभिर्देवयोनिभिर्विशेषैर्देवैः असुरैश्च तथा नरैश्च व्यवहरणीयस्य संस्कारवत्वाद् व्यवहर्तुं योग्यस्य लौकिकस्य तस्य कथा संश्राव्यते । तत्रात्र संस्कारवान् संस्कृतः शब्दः संस्कृता वाणी संस्कारस्य च निसर्गकृत्रिमभेदेन द्वैतत्वात् निसर्गसंस्कारवान् प्रयुक्तसंस्कारवान् इति दिशा द्विविधा सा वाणी ।

ननु लौकिकस्यैव शब्दस्य कथा प्रस्तूयते इति किम् । किमन्ये शब्दा न सन्ति । प्रतिपाद्यन्ते । तु अन्येऽपि ते । तद्यथा पातञ्जले महाभाष्ये अथ शब्दानुशासनम् । केषां शब्दानाम् । लौकिकानाम् वैदिकानाम् । इति । पुरा कल्पे एतदासीत् । इदानीन्तु वेदमधीत्य त्वरिता वक्तारो भवन्ति । वेदात्तु वैदिकाः शब्दाः सिद्धा लोकाच्च लौकिका इति च । एवं वैदिका अपि तदन्ये शब्दाः सन्ति । किं तेषां शब्दानां कथा न प्रस्तोष्यते इति चेद्विद्धि ।

सच्चिदानन्दस्वरूपब्रह्मातिरिक्तस्य सकलस्यापि विश्वस्य लोकपदार्थत्वाद्वेदस्यापि लोकान्तर्गतत्व-मेव । अतो वेदैर्विदिता भवा वा वैदिका शब्दा अपि लौकिशब्देभ्यो बहिर्भूता न इत्यतः पृथक्कथा तेषां नोपयुज्यते ।

एवमेव मीमांसादर्शनेऽपि—१ अध्याये २ पादे शब्दैक्याधिकरणे त्रिंशत्तमे प्रयोगचोदना-भावादर्थैकत्वमविभागादिति सूत्रे य एव लौकिकाः शब्दास्त एव वैदिकाः । त एवैषामर्थाः । कुतः, प्रयोगचोदनाभावात् । एवं प्रयोगचोदना सम्भवति । त एव शब्दास्त एवार्थाः । इतरथा शब्दान्यत्वे त एवैषामर्था इति न प्रतीयते । अत्र तु तथा प्रतीयते । तस्मादेकशब्दत्वमिति । उच्यते । प्रयोजनमिदम् । हेतुर्व्यपदिश्यताम् । इति ततो हेतुरुच्यते अविभागादिति । न तेषां वैदिकानामेषां लौकिकानाञ्च विभागमुपलभामहे । अत एवैकशब्दत्वं तांश्च स्तांश्वार्थानवगच्छामः । अतो नान्यत्वञ्च वदामः । इति सूत्रतच्छाबरभाष्याभ्याम् ।

लोके येष्वर्थेषु प्रसिद्धानि पदानि तानि तदर्थान्येव जैमिनिसूत्रेष्विति अवगन्तव्यम् । इति अथातो धर्मजिज्ञासेति सूत्रस्य शाबरभाष्येण च समर्थ्यते ।

यद्यपि एवं वैदिकानामपि शब्दानां लोके भवत्वाल्लौकिकत्वमिति चेत्तर्हि किमर्थं वैदिकानामिति पृथगुच्चारणं क्रियते । उच्यते – ब्राह्मणा आयाता वाशिष्ठोऽप्यायात इति । अत्र यथा ब्राह्मणेषु वशिष्ठस्य वैशिष्ट्यबोधनार्थं पृथगुपादानं तथैव लौकिकवैदिकशब्दयोः वैदिकशब्दानां वैशिष्ट्यं विलक्षणत्वं च ख्यापनीयमिति पृथक् तेषामुपादानं कृतम् इति । तथापि यथा भूरिति व्याहरद् भुवमसृजदिति दिशा यद् व्याहृतं तदेव सृष्टम् । तथैव यद् यादृशं देवैर्व्याहृतं देवानां मुखान्निःसृतं तादृश एव शब्दः स्वभावतो व्यवहरणीयः निसर्गसंस्कारवान् वेद इति । प्रथितः यः शब्दः लोके कृषिरिति उच्यते स एव शब्दो वेदे कार्षिरित्युच्यते न केवलं कार्षिरपि तु कारेषिरिति सहस्रशी-रेषेति । एवमेव लोके—करोति, वेदे कृणोति । लोके – विश्वानि भुवनानि, वेदे–विश्वानि भुवना, लोके–विश्वानि काव्यानि, वेदे–विश्वानि काव्या ( ऋचि ८।४१।६ ) लोके ब्रह्म एतत् । वेदे–ब्रह्मैतत् ( श्वेता० १।२ ) लोके–कर्णैः वेदे–भद्रम् कर्णेभिः । लोके गृह्णामि, वेदे–गृभ्णामि ते सौभगत्वाय हस्तम् ।

---

१—अमरकोशे प्रथमे स्वर्गवर्गे । २–अ० प्र० स्व० व० ।

वेदे शब्दस्योच्चारणप्रक्रियाबोधनार्थं शिक्षाप्रातिशाख्यान्याचार्यैः निर्दिष्टे निर्मिते च ।

तैत्तिरीयोपनिषदि च शिक्षाध्यायः । यथा—अथातः शिक्षां व्याख्यास्यामः ( लोके शिक्षेति ह्रस्वेकारघटितः शब्दः वेदे तु शिक्षेति दीर्घेकारघटितः सः ) वर्णः, स्वरः, मात्रा, बलम्, साम, सन्तानः । वर्णोऽकारादिः चतुःषष्टिसंख्यात्मक उभयत्र लोके वेदे समानः । स्वर उदात्तादिः वेद एव विशेषार्थप्रतिपत्तिकृत् । यथेन्द्रशत्रुः स्वरतोऽपराधात् । मात्रा अज्विषये कालतो भवन्ती ह्रस्वः दीर्घः प्लुतः इत्येवमुभयत्र व्यवह्रियते । बलं स्थानप्रयत्नानुदानत उभयत्र समानम् । सामगुणदोषयोः सद्भावाभावाभ्यां साम्यम् । सन्तानश्च संहितापादं क्रमजः धनादिश्च वेदे देवैर्निरुक्तमित्युच्यते । यत्रार्थनिर्वचनमेव भवति न तु साधनिका यथा देवरः कस्मात् द्वितीयोवरः यस्मात् । पुत्रः कस्मात् पुरु त्रायते इति अथवा पुन्नाम्नो नरकात् त्रायते इति । अत्र निरुक्तमेवोपयुज्यते न व्याकरणम् । तत्तु निरुक्तात् पृथगेव षडङ्गेषु । व्याकरणं शब्दप्रधानत्वात्साधनिकाप्रधानम् । निरुक्तमर्थप्रधानं शब्दस्तु तत्र गुणः ।

कल्पे मन्त्राणां विनियोगश्चिन्त्यते । तच्च चिन्तनं मन्त्रणामर्थाभिधानवशेन भवति । यो मन्त्रः यमर्थमभिधानेन संस्कर्तुं समर्थः स मन्त्रस्तत्र विनियुज्यते । तदुक्तम्—अर्थाभिधानसंयोगान्मन्त्रेषु शेषभावः ( अङ्गत्वं ) स्यात् । ३।२।१ इत्येवं निरुक्तम् निर्वचनमेव करोति । तेनैव तदर्थावगतिर्न व्याकरणेन । व्याकरणं शब्दप्रधानमत एवाह महाभाष्यकारः शब्दप्रमाणका वयं शब्दो यदाह तदेव प्रमाणम् । अयं द्विजातिभिरेव व्यवहरणीयो न तु शूद्रम्लेच्छान्त्यजैः । यस्य विषये शूद्रः संस्कृतां नोच्चरेद् गिरम् स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा शास्त्रज्ञानाम् इति समुद्घोषः ।

अत एव शूद्रस्य श्रृण्वतोऽध्ययने, रथ्यायां सञ्चरतोऽध्ययने, चन्दनघर्षणादिकार्यान्तरव्यापृतस्याध्ययने, स्थानप्रयत्नानुदानविरहिताध्ययने, आत्मनोऽशुचित्वे अशुचिदेशे काले चाध्ययने पूर्वसवर्णविलोमेनाध्ययने, गलोपलम्बितश्लिष्टास्पष्टत्वादिकरणादक्षव्यक्तिहीनतयाऽध्ययने प्रायश्चित्तीयते द्विजः । यः अन्तरचित्तवृत्तिवशादेव परिरक्षणरूपेण विशिष्टेन प्रयत्नेन उच्चारणीयः पठनीयः । यत्र यादृशरक्षणाभावस्तत्र आहिताग्निरपशब्दं प्रयुज्य प्रायश्चित्तीयां सारस्वतीमिष्टिं निर्वपेदिति नियमनात् ।

महामहोपाध्यायो वर्द्धमानोऽपि चेतयते अध्येतॄन् अध्यापयितॄन् अध्येष्यमाणान् अध्यापयिष्यमाणान् । यथा —

लौकिकव्यवहारेषु यथेष्टं चेष्टतां जनः ।
वैदिकेषु तु मार्गेषु विशेषोक्तिः प्रवर्त्तताम् ॥ इति ।

यः शब्दः या वाक् पाणिनिना स्वोपज्ञाष्टाध्याय्यां छन्दःपदेन व्यवहृता । या वाक् मन्त्रः कल्पो ब्राह्मणम् इति व्यवहारपदमारोहति । यस्या विषये कालिदासः कुमारसम्भवे सर्गे १२ श्लोके—

उद्घातः प्रणवो यासां न्यायैस्त्रिभिरुदीरणम् ।
कर्म यज्ञः फलं स्वर्गस्तासां त्वं प्रभवो गिरामिति ॥

या निसर्गसंस्कारवत्त्वात् संस्कृता वाणी पुराकल्पत इदानीं यावद् देववाणीसुरभारती-त्याख्यया प्रथमाना सर्वैः समादृतं व्यवह्रियमाणा च विराजते । इयं प्रतीची वाक् ।

यद्यपीयं पाणिनेः प्राक् प्रकृतिप्रत्ययबुबोधनदिशां स्वीकृत्य संस्कारवती अर्थात् केनापि व्याकरणेन व्याकृता नासीत् परं पाणिनिना तदनुयायिवार्त्तिककारेण च परःशतानि सूत्राणि निर्मिमिरे संस्कारार्थम् । ततः प्रभृति प्रयुक्तसंस्कारवतीत्यपि समाख्यां दधौ ।

अतः परा पराची वाक् । यां पाणिनिः भाषा इति पतञ्जलिः लौकिकः शब्द इति व्याजह्राते ।

तत्र लौकिकवैदिकशब्दयोरयं लौकिक एव शब्दः प्रधानभूतः । तथाहि अनेकार्थाभिधाने यत्नं कुर्वता लोकः पृष्ठतोऽनुगन्तव्यः केष्वर्थेषु लौकिकाः कान् शब्दान् प्रयुञ्जते इति महाभाष्यकारः सम्बभाषे सरूपाणामिति सूत्रे १।२।६३—६४ ।

लोकाधीनावधारणो हि शब्दार्थयोः सम्बन्ध इति वाचस्पतिमिश्रोऽपि विममृशे । शास्त्रमपि मीमांसाख्यम्—लोकावगतसामर्थ्यः शब्दो वेदेऽपि बोधकः—इति दिशा लोकावलोकितां पदशक्ति पदार्थयोग्यताञ्च स्वीकृत्य प्रचरति इतरथा आदित्यो यूपः ( तै० ब्रा० २।१।५ ) यजमानः प्रस्तरः ( तै० स० १।४।७ ) इत्यादिवाक्यस्तोमस्य यथाश्रुतेऽर्थे प्रामाण्यापत्तेः । वैदिक्याः क्रियायाः समक्षक्षयित्वया पारत्रिकफलकारणान्यथाऽनुपपत्त्या पूर्वाङ्गीकरणानुपपत्तिश्च लोके इदं रजतमित्यत्र शुक्तिव्यक्तितत्त्वाभिव्यक्तौ अपनीयमानस्य आरोपितस्य रजतस्य सम्बन्धे मिथ्यादृष्टो, तद् दृष्टान्तावष्टम्भेन आत्मतत्त्वसाक्षात्कारविद्यापनोद्यस्य आविद्यकस्य बन्धस्य मिथ्यात्वानुमननासम्भवात् ।

एवं वैदिकशब्दाश्रयस्य अतएव प्रधानस्य लौकिकशब्दस्य 'संस्कारपदवेदनीयानुशिष्टि-वशादियं प्रकृतिः अयं प्रत्यय इति प्रकृतिप्रत्ययविभागप्रयुक्तसंस्कारवत्त्वसद्भावाद् द्वितीयत्वं तेन संस्कृता वाक् द्विविधेति प्राप्तम् ।

ते इमे द्वे विधे तयोः द्विजातिमात्रभाषणीया एका वाक् इति । सर्वमानुषसाधारणी मानुषी द्वितीया वाक् इति चैवं वाल्मीकिकविनिबद्धेन वक्त्रा हनुमता वाल्मीकिरामायणे सुन्दर-काण्डे विश्राविते अपि ।

तथाहि सीतायै कैः शब्दैः स्वसंस्तवः संग्राहणीय इति पुरस्ताद् यच्चिन्तितं तच्चिन्तनाव-सरीयौ द्वौ श्लोको स्तः तयोरेको यथा—

यदि वाचं प्रदास्यामि द्विजातिरिव संस्कृताम् ।
रावणं मन्यमाना मां सीता भीता भविष्यति ॥

इति प्रथमा वाक् ।

परस्ताच्चिन्तितः श्लोको द्वितीयो, यथा—

वाचं चोदाहरिष्यामि मानुषीमिह संस्कृताम् । इति द्वितीया वाक् ।

तथा कालिदासेनाऽपि स्वप्रबन्धे कुमारसम्भवे ७ सर्गे ९० श्लोके यथा—

द्विधा प्रयुक्तेन च वाङ्मयेन सरस्वती तन्मिथुनं नुनाव ।
संस्कारपूतेन वरं वरेण्यं वधूं सुखग्राह्यनिबन्धनेन ॥

संस्कारवत्यैव गिरा मनीषी सम्पूज्यतेऽथात्र विभूष्यते च—वाण्येका समलङ्करोति पुरुषं या संस्कृता धार्यते । इति च । एवं सुरभारतीति गीर्वाणवाणीति देववाणीति मनुष्यवागिति नवभारतीति प्रथितामुभयविधां वाणीं ब्राह्मणा वदन्ति । तद्यथा—

चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः ।
गुहा त्रीणि नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति ॥

वाक्परिमिता (अत्र षष्ठीसमासः) वाचः परिमितानि पदानि चत्वार्येव न पञ्चमं पदमस्ति । तानि पुनः ये मनीषिणः मेधाविनः ब्राह्मणाः सन्ति ते विदुः । तेषां पदानां मध्ये त्रीणि पदानि गुहा गुहायां निहिता निहितानि । अतएव तानि पदानि नेङ्गयन्ति न वेदयन्तेऽर्थम् । तत्र तुरीयं चतुर्थं भागं वाचो वाण्याः परस्परं ज्ञानार्थं परस्परं व्यवहारार्थं मनुष्या वदन्ति व्यवहरन्ति ।

प्रश्नः—कतमानि पुनस्तानि चत्वारि पदानि तत्रोत्तरं व्याख्याति यास्काचार्यः । नामाख्याते च उपसर्गनिपाताश्चेति वैयाकरणाः । अत्र चतुर्षु अप्रसिद्धत्वादाख्यातोपसर्गनिपातपदानि अर्थं वेदयन्ते । नामानि तु प्रसिद्धार्थत्वाद् गवाश्वादीन् अर्थान् वेदयन्ति ।

एवं मन्त्रः कल्पो ब्राह्मणश्चतुर्थी व्यावहारिकीति याज्ञिकाः । अत्रापि व्यावहारिक्येव तु वेदयतेऽर्थम् । ऋचो यजूंषि सामानि चतुर्थी व्यावहारिकी । अत्रापि व्यावहारिक्येवार्थं वेदयते । सर्पाणां वाक् वयसां वाक् क्षुद्रस्य सरीसृपस्य वाक् चतुर्थी व्यावहारिकी वाक् इत्येके अधिभूतविदः । अत्रापि व्यावहारिक्येव वेदयतेऽर्थान् नेतराः ।

पशुषु तूणवेषु (जीवविशेषेषु) मृगेषु आत्मनि च इत्यात्मवादा आत्मानं प्रवदन्ति ये आचार्यास्ते आत्मप्रवादाः । अत्र तूणः तूणी तूणीरम् इति त्रयोऽपि तरकस इत्याख्यस्य वाचकाः शब्दाः । यं योद्धारो युद्धकाले स्वपृष्ठभागे धारयन्ति । तद्वाति गन्धनं सूचनं ददाति अथवा प्रकाशनं करोति । वा गतिगन्धनयोरिति धातोर्डप्रत्यये तूणवः । तूणस्य प्रकाशको निर्माता । उत्साहनं च हिंसायां सूचने चापि गन्धनम् इत्यमरः । गन्धनं सूचनोत्साहहिंसनेषु प्रकाशने इति विश्वः । ततश्च सूचनादायकः जीवविशेष एवेति ।

अन्यच्च पशुरपि जीवः मृगोपि जीवः आत्मापि जीवात्मा । अत एषां साहचर्यात् तूणवोऽपि अप्रसिद्धनामा कश्चिज्जीवविशेषः । अथापि ब्राह्मणः भवति । सा वै वाक् सृष्टा चतुर्धा व्यभवत् ।

एष्वेव लोकेषु त्रीणि ( तिस्रः ) पशुषु तुरीयम् । तदेतदभिव्यक्तार्थमेव । या वाक् पृथिव्यां साग्नौ सा रथन्तरे । यान्तरिक्षे सा वायौ सा वामदेव्ये । या दिवि सादित्ये सा बृहति सा स्तनयित्नौ । अथ पशुषु ! ततोऽर्थात् एभ्यः या वाक् अत्यरिच्यत अतिरिक्ता आसीत् तां ब्राह्मणेषु अदधुः तस्माद् ब्राह्मणा उभयीं वाचं वदन्ति या देवानां या च मनुष्याणाम् इति ।

अत्र ब्राह्मणपदं द्विजातिमात्रोपलक्षणार्थम् । द्विजातिना छन्दसः श्रुतेः भाषायाश्च व्यवहरणात् । द्विजात्यतिरिक्त एकजातिः शूद्रस्तु पाणिनिना भाषापदेन व्यवहृतां प्रयुक्तसंस्कारवतीमेव संस्कृतां वाचं व्यवहरेत् ।

यस्या वाल्मीकिरामायणे ऋषिणा—

पठन् द्विजो वागृषभत्वमीयात्, स्यात् क्षत्रियो भूमिपतित्वमीयात् ।
वणिग्जनः पण्यफलत्वमीयात्, जनश्च शूद्रोऽपि महत्त्वमीयात् ॥

एवमेव महाभारतेऽपि विष्णुसहस्रनामस्तोत्रस्य विषयेऽपि, प्राप्नुयुर्मानवाः शुभम् । किं जपन् मुच्यते जन्तुर्जन्मसंसारबन्धनात् । स्तुवन्नामसहस्रेण पुरुषः सततोत्थितः । स्तवैरर्च्चेन्नरः सदा । यश्चापि परिकीर्तयेत् । वेदान्तगो ब्राह्मणः स्यात् क्षत्रियो विजयी भवेत् । वैश्यो धनसमृद्धः स्याच्छूद्रः सुखमवाप्नुयात् । इत्येवं मानवमात्रस्य कृते पठनाधिकारः समर्थितः ।

गीताया अपि पठनार्थं सर्वविधस्य भावस्य कृते अधिकारः प्रबोधितः भगवता स्वयम्—

निराहारस्य देहिनः ( २।५९ ) । तस्माद्यस्य महाबाहो—तस्य प्रज्ञा प्रतिष्ठिता (२।६८) । सङ्गं त्यक्त्वा करोति यः । लिप्यते न स पापेन ( ५।१० ) । यो यो यां यां तनुं भक्तः—तस्य तस्याचलां श्रद्धाम् ( ७।२१ ) ।

मां च यो व्यभिचारेण भक्तियोगेन सेवते ।
स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते ॥ ( १४।२६ )

एवं मानवमात्रकृते पठनाधिकारं समर्थयन् भगवान् पर्यन्ते १८ अध्याये कथयति—

अध्येष्यते च य इमं धर्म्यं संवादमावयोः ।
ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः ॥ इति ।

महाभाष्येऽपि पतञ्जलिऋषिणा रथिसारथिसंवादेन एवोऽर्थः चतुर्णां वर्णानां लौकिकसंस्कृतपठनाधिकारः सिद्धान्तितः ।

न वेदव्यवहारोऽयं संश्राव्यः शूद्रजातिषु । स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा । इति भारतमाख्यानं कृपया मुनिना कृतम् । अनेनापि वैदिकसंस्कृताध्ययनाधिकारं निषिध्य लौकिकसंस्कृताध्ययनाधिकारः अनुमोदितः समर्थितः साधितश्च । ननु भोः यथा गायत्रीमन्त्रस्तकारेण आरभ्यते यादित्यनेन समाप्यते तथैव वाल्मीकिरामायणमपि तपः स्वाध्यायेति दिशा तकारेण

प्रारभ्य ईयादिति प्रकारेण यादित्येवं समाप्तिं नीतम्। तस्मात् वैदिकसंस्कृतेनाग्रथितस्यापि रामायणस्य वेदसम्मितत्वेन शूद्रकर्तृकपठनानर्हत्वमेवेति चेच्छृणु।

निषादस्थपत्यधिकरणदिशा निषादस्थपतिं याजयेत् इत्यत्र निषादश्चासौ स्थपतिश्चेति कर्मधारयो वा, निषादानां स्थपतिरिति षष्ठीतत्पुरुषो वा, निषादः स्थपतिः बृहस्पतिर्यजनकर्ता शिल्पी यस्येति बहुव्रीहिर्वेति त्रिविधं समासं विकल्प्य गुरुत्वेन बहुव्रीहिं षष्ठीतत्पुरुषो परित्यज्य कर्मधारयं स्वीचकार। तत्र यद्यपि निषादानां शुद्रत्वाद्वेदाध्ययनानर्हतया वैदिकमन्त्रोच्चारणपूर्वकं यजन् करणकारणयोरप्राप्तिस्तथापि परमाप्तमुनिवचनप्रामाण्येन शूद्रस्यापि निषादभिन्नस्थपतेर्यजनयाजने स्वीकृते। तद्वदेव प्रकृतेऽपि परमप्रमाणाप्तभूतऋषिवचनप्रामाण्येन शूद्रस्यापि रामायणमहाभारतादिपठनाधिकारः सुसाध्यते। वर्षासु रथकारोग्नीनादधीत इति श्रुतेः प्रामाण्येन मीमांसकैः शूद्रस्यापि काष्ठतक्ष्णो रथकारस्य अग्न्याधानं, तदुपयोगिवेदाध्ययनं मन्त्रोच्चारणपूर्वकं हवनञ्च स्वीकृतानि। अतो लौकिकसंस्कृतायां भाषायां ग्रथितानां रामायण–महाभारतपुराणेतिहासानां स्मृतिधर्मशास्त्रज्योतिषायुर्वेदधनुर्वेदगन्धर्ववेदाद्युपवेदानां गृह्यसूत्रश्रौतसूत्रव्याकरणन्यायादिषड्दर्शनानां श्रव्यपाठ्यदृश्यलिप्ये चित्रेतिचतुर्विधकाव्यानां तथालङ्कारशास्त्राणां बौद्ध-जैनसाहित्यानाञ्चाध्ययने चतुर्णां वर्णानां म्लेच्छान्त्यजानां च समानोऽधिकारः।

संस्कृताया भाषाया इदं स्वीयं वैचित्र्यं यदस्यां प्रयुक्तानां शब्दानामन्वर्थता ओतप्रोता विराजते। एतादृशं गौरवं कयाऽपि भाषया न प्राप्तम्। यथा कश्चिदपि आँग्लो विद्वान् केनाऽपि पर्यनुयुज्येत यदिदं वस्तु ट्री इति कुतः कथ्यते तदा स मूक एवावतिष्ठेत्। न किञ्चिदपि वक्तुं पारयेत्। यदि अस्मात् स पृच्छेत्तदि वयं वक्ष्यामः यदिन्धनार्थं छेदनीयः स वृक्षः ओव्रश्चू छेदने धातोर्निष्पन्नत्वात्। किमेवमस्ति—अन्यस्यां कस्यामपि भाषायां स्थितिः। अन्यभाषाविदोऽपि न विज्ञा एतादृशव्युत्पत्तेः। सर्वास्वपि स्वदेशीयविदेशीयभाषासु लौकिकसंस्कृताया अस्मदीयभाषाया महान् प्रभाव एतस्या एव सर्वास्त। निःसृता इति भारतपताकया दोधूयताम्। जोघुष्यतां ब्रह्मदेशादारभ्य आयर्लैण्डप्रभृतिप्रदेशेषु सर्वेषु साधारण्येन प्रचलितासु सप्तविंशतिभाषासु संस्कृतायाः समानार्थप्रतिपादकत्वम्, अनन्यसाधारणत्वं, सर्वदेशव्यापकत्वम् इतरदेशीयव्यवहारबोधनक्षमत्वम्। इतरदेशीयैः सौलभ्याध्ययनयोग्यत्वञ्चेति।

ऋग्वेदः सम्पूर्णविश्वे प्रथमो ग्रन्थ इति सर्वैः प्राचीनैरर्वाचीनैरनुकूलैः प्रतिकूलैश्च सर्वैः स्वीकृतम्। तत्र कोकूयते यद्—

देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति। ( ऋ० ८।१००-११ )

देवा इन्द्रादयः देवीं देदीप्यमानां द्योतयन्तीं वाचमजनयन्त सर्वसाधारणेषु प्राकाशयन्। तां विश्वरूपाः पशवः अष्टभिर्घृणादयादिभिः पाशैर्वेष्टिताः वदन्ति उच्चारयन्ति। इति। स्मृतिष्वपि सर्वमान्यायाः केनापि न प्रतिषेध्यायाः मनुस्मृतेरपि इयमेव कथा। साऽपि कथयति यदियं संस्कृता

भाषा आदिभाषा। यथा सर्वेषां स तु नामानि कर्माणि च पृथक्-पृथग्। वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे। इति। अतो वेदोदिता इयं भाषा आदिभाषा आसीत् अस्ति स्थास्यति च। नात्र विवादः अपि तु सर्वेषां पण्डितानामैकमत्यम्।

ये ते विदेशीयचाकचक्येनान्धाः अथवा अल्पज्ञाः शास्त्रीयदृष्टिरहिता आत्मानमेव बहुमन्वानः सम्यक् सम्प्रदायविदो न सन्ति ते प्रकृते न चर्चनीया अपि तु वर्जनीया एव दूरतः।

इदं स्पष्टं – स्पष्टं सम्भालयन्तु यद् अखिलेऽस्मिन् विश्वे यावन्त्यो भाषाः सन्ति तासु सर्वासु सरला विस्तृता सुगमा सुपूरा अन्वर्थशब्दमयी भाषा यदि काचिदस्ति तर्हि संस्कृता एव। यस्यामुच्चारणविधेः शिक्षा प्रतिवर्णं समयमयी विराजते। नान्यत्र एतादृशी सांसिद्धिकी मूलतत्त्व-संरक्षिणी उच्चारणप्रकृतिः। अत एवात्रत्रिषष्टिः ६३ चतुःषष्टिर्वा ६४ वर्णाः शम्भुमते मताः। नान्यस्यां कस्यामपि भाषायामियन्त ईदृशाश्च वर्णाः। अन्यासु भाषासु लातिनीहिब्रूभाषायां २० विंशतिवर्णाः। फ्रान्सिसीयायां तस्यां २५, आङ्ग्लायां तस्यां २६, स्पेनीयायां तस्यां २७, तुर्काणा-मरबाणाञ्च तस्यां २८, पारसीकानां तस्यां ३१, रूसीयायां तस्यां ३५ सन्ति। तेन स्वयं निभालयन्तु विचारयन्तु पण्डिताः कथं वर्णानामभावे पदानि स्युः। तदभावे कथं वाक्यानि भवेयुः। वाक्यानाञ्चाभावे कथमर्थज्ञानं स्यात् ग्रन्थरचनञ्च स्यात्।

जगति आन्ध्यमेव प्रसज्ज्येत। अतोऽन्या भाषा वर्णानामभावे अपूर्णाः इयञ्चास्माकं संस्कृता भाषा सुपूरा। अत्र तु रससमुचिता उपयुक्ता एव वर्णा न न्यूना नाधिकाश्च।

एवं हि बोध्यम्। अर्थविषये माने अर्थं ज्ञापयितुं पदस्य वाक्यस्य वा प्रयोगः। तस्मात् पदं वाक्यञ्चार्थे प्रयुज्यते। तत्र विभक्त्यन्तं पदं पदकदम्बश्च वाक्यम्। अनयोः स्वरूपमाश्रयणीयम्। स्वरूपनिग्रहैश्च नान्तरेण वर्णप्रयोगमतः ६३ त्रिषष्टिः, ६४ चतुःषष्टिर्वा वर्णाः समुचिता आवश्यकाश्चेति कथ्यम्।

ननु प्रकृते कतिपयाः घड़ा घोड़ा थोड़ा कपड़ा इत्यादौ विन्दुसम्पृक्तो डकारः दौजख दौलत इत्यत्र तादृशौ जकारखकारौ उच्चार्यन्ते। परन्तु संस्कृतवर्णमालायाम् इतरभाषापेक्षया वर्णानामा-धिक्येऽपि तादृशवर्णानामभावो न्यूनतेवेति चेन्न।

अत्रेदं बोध्यम्। सर्गनिसर्गं ईदृशः यत् प्रतिदशक्रोशमुच्चारणं विपरिवर्तते। ध्वनिर्भिन्नो भिन्नो भवति। ध्वनिभेदात् स एव शब्दो विभिन्न इव अनुभवसीम्नि समागच्छति। अतः साधारणा अप्रबुद्धा एव न प्रबुद्धा अपि कथयितुमारेभिरे यदयं शब्दः भिन्नः। तद्देशीयः एतद्देशीय इति। यथा जञो संयोगेन ज्ञ इति वर्णो भवति। उत्तरप्रदेशीया एवं गकारयकारयोः संयोगेन निष्पद्यमानः ग्य इति उच्चारयन्ति। गुर्जरप्रान्तीयाः ज्न इति नकारघटितम् उच्चारयन्ति। वस्तुतस्तुज्ञ इत्युच्चारणीयः सः। यथा मालवीयः शब्दः। एनं वाङ्गा उत्कलाश्च मालव्य इत्युच्चारयन्तः श्रूयन्ते। एषामाशयः शब्दभेदं कर्तुं नास्ति। परं ते किं कुर्युः। यतः तेषामुच्चारणस्य शैली

एव तादृशी सांसिद्धिकी । कः शीलं प्रसह्य परिवर्तयेत् । शीलन्तु शैलेयम् शिलावद् दृढं भवति ।

अन्यच्च वाग्विकल्पानां पुरुषभेदानानन्त्यमत एव अनैयत्यञ्च । तेन अनियतेषु तेषु यथा शास्त्र-व्यवस्थाभेदो न भवति सविकल्पः परिगृह्यते । तेषु उच्चारणविकल्पोप्येकः । सर्वे मानवाः सामान्यतः हिङ्गु हिङ्ग इति वदन्ति परं प्रान्तनिवासिनो यवना हींगेति प्लुतादपि तारस्वरेण वदन्ति तत्र स्वभाव एव शरणम् ।

अतोऽपि देवभाषा एवं नरभाषा भिन्ना भिन्ना । प्रत्यक्षं प्रमाणं सर्वेषामनुमानादीनामुप-जीव्यम् । अतः सर्वेषां बाधकम्, किन्तु वैदिकशब्दस्य बाधकं नास्ति । तद् यथा–ब्रह्म सत्यं जगन्मिथ्या, एकमेवाद्वितीयं ब्रह्म, नेह नानास्ति किञ्चन । प्रत्यक्षतो विरुद्धार्था अपि श्रुतयः सर्वैराचार्यैर्निर्विवादं प्रमाणत्वेन गृह्यन्ते, परं तदेव प्रत्यक्षं लौकिकशब्दस्य बाधकं यतः प्रत्यक्षशब्द-योर्विचारे प्रत्यक्षं बलवत् शब्दः दुर्बलः । अतो दुर्बलः शब्दो बाध्यते ।



# श्रीबेल्लंकोण्डरामरायकवीन्द्रः

स्व० श्री के. लक्ष्मणशास्त्री

प्रातस्स्मरणीयः श्रीरामरायपण्डितवरेण्यः आन्ध्रप्रदेशे गुण्टूरुनामकमण्डलस्थितनरसारावुपेट उपमण्डलान्तर्गतपमिडिपाडु इति ग्रामं स्वजन्मना पावितवान्। 'बेल्लंकोण्ड' वंशे उत्पन्नोऽयं विद्वत्कविः 27–12–1875 ई० जन्म लेभे। गीर्वाणकविताचातुर्ये धुरीणः सहजपाण्डित्यशोभितोऽयं प्रायः सकलशास्त्रकोविदः षड्दर्शनसारज्ञः आस्तिकधर्मश्चासीत्। निरन्तरं स्वगृहे अयं विद्वान् नैकान् छात्रान् अन्नदानपूर्वकं शास्त्राण्यध्यापयामास। निगर्वशिरोमणिः अहङ्कारममकाररहितः, निराडम्बरजीवनः सर्वदा स्वाराध्यस्य भगवतो विद्याहयग्रीवस्य संसेवनतत्परः विशिष्य निखिलबुधविधेयः सुधीधौरेयश्चासीत्।

अस्य विदुषः पितामह आलवारार्यः मातापितरौ "हनुमाम्बामोहनरायौ" आस्ताम्। ऋक्शाखीयाश्वलायनधर्मानुसारी भारद्वाजसगोत्रोऽयं सम्पन्ने नियोगिब्राह्मणकुटुम्बे उत्पन्नः निरन्तरं धर्मानुष्ठानं कुर्वन्नासीत्। अयं हि विद्वान् सप्तनवत्युत्तरसप्तदशशततमे (1797) शालिवाहनशके युवसंवत्सरमार्गशीर्षामावास्यायामिन्दुवासरे अर्धरात्रे कर्काटकलग्ने प्रादुर्बभूव। अस्य विद्याभ्यासाय केवलं निमित्तमात्रमेव गुरव आसन्। केवलमेकदा उपदेशमात्रेणैवाशेषं वैदुष्यं प्राप्य अत्यल्प एव वयसि भगवतो हयग्रीवस्य अनुग्रहसम्पादनाय कृष्णातटवर्तिनि वेदाद्रिनामके पुण्यक्षेत्रे तपश्चरित्वा हयग्रीवप्रसादेन निखिलशास्त्रवैदुष्यं सुललितकविताचातुरीञ्च अवाप। विशिष्य औपनिषद्यामात्मविद्यायामनन्यादृशीं शेमुषीमवाप। विशेषतोऽस्य प्रतिभाया वर्णनं अत्यन्तमोदावहं भवति विदुषाम् यदयं पण्डितः अष्टत्रिंशद्वर्षपरिमिते एव स्वजीवने शताधिकान् (१४३) ग्रन्थान् शास्त्र-काव्य-नाटकादीन्, व्याख्यानानि च विरच्य प्रारब्धकर्मवशात् अल्प एव वयसि आनन्दनामसंवत्सरे कार्तिकशुक्लनवम्यां मोक्षसाम्राज्यमध्यतिष्ठत्।

यथा आदिशङ्करभगवत्पादाचार्याः पञ्चमे वयसि मातुरनुज्ञया सन्न्यस्य गोविन्दभगवत्पादेभ्यः सकलाः कला अधीत्य यावद्देहविसर्जनमौपनिषदमद्वैतमतमेव प्रचारयन्तो देशे तत्स्था-

* 69 आदर्शनगर, हैदराबाद।

पनार्थं सर्वमायुः विनियुक्तवन्तः, तथैव अयमपि विद्वन्मणिः रामरायसुधीः अत्यल्पे एव वयसि अद्वैतवेदान्तमतप्रचारे एव आत्मनं विनियुक्तवान् इयानेव भेदः उभयोः यदयं न परिव्राजक आसीत् । केवलं गृहस्थे एव आश्रमधर्मे स्थित्वा इयांसो ग्रन्थान् विलिख्य इयन्तं च कालं शाङ्करमतप्रचारे एव अत्यवाहयत् । वास्तविकोऽयं विषयः तन्निर्मितग्रन्थपरिशीलनेन विदुषां मनोगोचरो भवति । पण्डिते इष्यमाणाः शास्त्रार्थविचारः ग्रन्थरचनम् अध्यापनम्-प्रचार इति चत्वारोऽपि गुणाः शङ्करभगवत्पादे इव अस्मिन्नपि विदुषि सहजा आसन्निति वक्तुं शक्यते ।

मार्गवशात् स्वग्रामं समुपस्थितौ द्वौ विद्वत्सोदरौ रामशास्त्रि-सुब्रह्मण्यशास्त्रिनामानौ समाश्रित्य स्वगृहे एव संस्थाप्य अल्पीयस्येव काले तर्कव्याकरणशास्त्रे अनेनाधीते । तत्र रामशास्त्री व्याकरणविद्वान् अन्यः तर्कविद्वांश्वास्ताम् । एतच्छास्त्रद्वयपाण्डित्यमहिम्ना वेदान्तशास्त्रे अयं कविः स्वप्रतिभया पाण्डित्यं समपादयत् । कुलपतिरिव अयं विद्यार्थिभ्यः अन्नवस्त्रादिदानेन तानपाठयत् । तस्य शिष्याः तत्कीर्तिपताकायमानास्तत्र तत्र विराजन्ते आन्ध्रदेशे । केचन शतावधानिनः अन्ये कवयश्चास्य शिष्या आसन् । अयं सुकृती अतएव अल्पायुरासीत् ।

अस्य कृतिनः कृतयो बहवः प्रादुरभूवन् । तत्र वेदान्तमुक्तावली ईशादिद्वादशोपनिषत्तात्पर्यप्रख्यापकैः त्रिशतपरिमितैः शार्दूलविक्रीडितैः पद्यैर्निबद्धा । न केवलं स्वोपज्ञव्याख्यया विराजतेऽयं वेदान्तमुक्तावलीग्रन्थः, अपितु उपनिषच्छ्रवणपरिकरभूतान् नानाविधान् विषयान् अथ चाद्वैतसंप्रदायग्रन्थप्रतिपादितार्थाविसंवादिनोऽर्थान् इयं मुक्तावली सविस्तरं सविशेषञ्च प्रतिपादयतीति सुनिश्चितं मन्यन्ते विद्वांसः । काव्यमार्गगामिभ्यः गुडजिह्विकया अयं विद्वान् इमां वेदान्तमुक्तावलीं विरच्य स्वस्य विशालां पाण्डितीञ्च प्रथयित्वा बालहृदयान्यप्यावर्जयति । मन्यामहे कविरयं शार्दूलविक्रीडितं वृत्तमुपाददानस्य अप्रतिहतप्रज्ञावाणीप्रसरस्य आत्मनः क्रीडामात्रमियं कृतिरिति व्यञ्जयतीति ।

## श्रीबेल्लंकोण्डरामरायस्य प्रशस्तिः

---

श्री"वेल्लंकोण्ड"वंशे बुधजनविनुते, श्रीभरद्वाजगोत्रे
श्री"रामाराय" विद्वद्विनुतबुधवरः "कर्कटे" पुण्यलग्ने
"ऋष्यङ्कर्ष्येक" [ १७९७ ] संख्ये "युव" समितशके शालिवाहप्रतीके
"ऋक्शाखी" "चन्द्र"वारे निशि जनिमगमत् मार्गशीर्षीयदर्शे ॥ १ ॥
वैपश्चित्यविभूषणस्य सुकवेः श्री"राम" वाचांनिधेः
मातापित्रभिसंज्ञितौ तु "हनुमा देवी तथा मोहनः" ।

आन्ध्रे "गुण्टुरु" मण्डलान्तर "पमिड्पाड्वग्रहारे" शुभे
नर्सारावुपुरी—समीपसुहिते तौ न्यूषतुस्सात्मजौ ॥ ॥ २ ॥
"रामशास्त्रि" गुरुवर्यपदाग्रे "पाणिनीय"मनवद्यमधीये ।
अध्यगीष्ट च तदग्रजसेवाप्तधीरपि "कणाद" सुतन्त्रम् ॥ ॥ ३ ॥
सुब्रह्मण्य - सुधीन्द्र - तर्कविदुषो रामाच्च सुव्याकृतेः
"काणादं" ननु "पणिनीय"मपि यो जग्राह "राम" स्सुधीः ।
संश्रित्य प्रतिभामहत्वमथ सद्विज्ञानवत्त्वं स्वकं
त्र्यन्तागमसिन्धुमन्थनचणः ब्राह्मीं सुधां सोऽग्रहीत् ॥ ॥ ४ ॥
"वेदाद्रि" शिखरदेशे "कृष्णा" तट शोभिते महात्माऽयम् ।
सुचिरं तपश्चरित्वा संप्रापन् "ब्रह्मऋषि" पदं भव्यम् ॥ ॥ ५ ॥
नित्यानुष्ठानरतः शास्त्राण्यखिलानि शिष्यसन्दोहान् ।
अध्यापयन् "कुलपतिः" समपोषयदन्नवस्त्रदानैश्च ॥ ॥ ६ ॥
अद्यापि विद्वत्कवि"राम"शिष्याविद्वत्कविश्रेणिषु भूष्यमाणाः ।
नैके प्रथन्ते "निखिलान्ध्रदेशे" भाग्यं क्रियत् स्तूयत एतदीयम् ॥ ॥ ७ ॥
समस्तशास्त्राण्यवलोड्य विद्वान् शताधिकग्रन्थनिबन्धचञ्चुः ।
काव्यानि चम्पूरथ शब्दशास्त्रं वेदान्तशास्त्रीयकृतीश्च निर्ममौ ॥ ॥ ८ ॥
स्थालीपुलाकान्यायेन रामारायविनिर्मिताः । अत्र केचन सद्ग्रन्थाः प्रदर्श्यन्ते सतां मुदे ॥९॥
अद्वैतामृतवर्षि वेदशिरसां सिद्धान्तमुक्तामणिं
कान्तासम्मितकाव्यसूत्रनिचितानामुच्य विद्वद्धृदि ।
वैदुष्ये कवितापथे च सरसे सर्वेषु शास्त्रेष्वयं
निष्णातो बुधसम्मदाय विबुधोऽनल्पाय सङ्कल्पते ॥ ॥ १० ॥
सौन्दर्यराशिः सुगुणावदातः श्री "रामरायः" सुधियां वरेण्यः ।
"आनन्द" वर्षे खलु कार्तिकस्य "पक्षेऽवदाते""नवमी"तिथौ सः ॥ ॥ ११ ॥
"यत्राकृतिस्तत्रगुणाः प्रथन्ते" "पापी चिरायुः सुकृती गतायुः" ।
इत्युक्तियुग्मानुकृतिश्शुभाङ्गः वसूत्तरत्रिंश (३८) वयस्यगाद्द्याम्" ॥ ॥ १२ ॥
अष्टात्रिंशमितायुषाऽपि ननु यस्त्वष्टासु दिक्षु प्रभाम्
कीर्तिं चानितरां प्रभावमतुलं संस्थाप्य विद्वत्कविः ।
श्रीमच्छङ्करदेशिकेन्द्रपदवीमन्वास्य शिष्यस्स्वयम्
रामारायबुधो ह्यनन्यसुलभं सद्ब्रह्मभूयं गतः ॥ ॥ १३ ॥

"सुब्रह्मण्य" सुधीपतिस्तु "कविता" वंशाब्धितारापतिः
धर्मार्थावथ काममोक्षयुगलं स्वीयं समग्रं वयः
संयोज्यात्र सुकर्मणि प्रतिपदं देशानटित्वा भृशम् ।
'रामाराय' समस्तपुस्तक—यशस्सम्मुद्रणे मुद्रितः ॥ ॥ १४ ॥

"कविता"वंशजनुषे "सुब्रह्मण्याभिधाजुषे ।
अजरामरतां दद्यादजो नित्यः परात्परः ॥ ॥ १५ ॥

श्रीरामरायकवीन्द्रस्य कृतयः १४३ आसन् । तेषु केचन नोपलभ्यन्ते, केचनः प्रकाशिताः केचन न प्रकाशिताः । तत्र शरद्रात्रिरिति सिद्धान्तकौमुदीव्याख्या पण्डितवर्यैः स्वयं द्रष्टव्या सा नाद्यावधि प्रकाशिता । सा सर्वयत्नैः मुद्रापयितव्या येन विद्यार्थिलोकस्य महानुपकारो भविष्यति ।

## श्रीबोल्लंकोण्डरामरायकवीन्द्रस्य कृतयः

अद्वैतवेदान्तप्रतिपादकग्रन्थाः

१ श्रीभगवद्गीता भाष्यार्कप्रकाशिका
२ वेदान्तमुक्तावली—सव्याख्या
३ शारीरकचतुस्सूत्रीविचारः
४ शङ्कराशाङ्करभाष्यविमर्शः
५ वेदान्तकौस्तुभः
६ अद्वैतविजयः
७ वेदान्तसंग्रहः
८ लोकायतादियोगान्तमतखण्डनम्
९ अद्वैतान्यमतखण्डनम्
१० वेदान्ततत्त्वामृतम्

[ इमे दश देवनागर्यां मुद्रिताः ]

११ देहदेहिभावनिर्मूलनम्
१२ वेदान्तनिश्चयः
१३ मोक्षप्रासादः
१४ सिद्धान्तसिन्धुः [ दशश्लोकी सिद्धान्तबिन्दुव्याख्या ]
१५ अद्वैतामृतम्
१६ वेदान्तदीपिका
१७ वेदान्तदिनकरः
१८ भागवतचतुश्श्लोकी व्याख्या
१९ कृष्णोद्धवसंवादव्याख्या
२० मुक्ताहरिलता
२१ रामायणान्तरार्थः
२२ भारतान्तरार्थः
२३ गरुडसन्देशः

[ एषु केचिदांध्रलिप्यां मुद्रिताः केचिदमुद्रिताः ]

धर्मशास्त्रसम्बन्धिनः

२४ शूद्रधर्मदर्पणम्
२५ धर्मप्रशंसा
२६ ब्राह्मणशब्दविचारः
२७ तप्तचक्राङ्कनखण्डनम्
२७ A स्वीकारनिर्णयः [ अमुद्रितः ]

साहित्यविषयकाः

२८ रुक्मिणीपरिणयचम्पूः
२९ श्रीकृष्णलीलातरङ्गिणीकाव्यम् (सव्याख्यानम्)

३० भागवतचम्पूव्याख्या [ मन्थरा ]
३१ समुद्रमथनचम्पूः [स० व्याख्या] २८ मञ्जर्यः
३२ कन्दर्पदर्पविलासभाणः
३३ समस्यारत्नाकरः
३४ विश्वरूपगद्यम्
३५ सुमनोमनोरञ्जनम्
३६ रमापरिणयचम्पूः [ इमे नवग्रन्थाः आन्ध्रलिप्यां मुद्रिताः ]
३७ मुरारिनाटकव्याख्या
३८ विष्णुविजयः [ इमौ अमुद्रितौ ]

व्याकरणम्

३९ शरद्रात्रिः [ सिद्धान्तकौमुदीव्याख्या अमुद्रितः ]

विमर्शग्रन्थाः

४० धनवर्णनम्
४१ काममीमांसा
४२ त्रिमतसम्मतम्
४३ विद्यार्थविद्योतम्
४४ कलिभूषणम्
४५ नियोगिवैदिकजनहितोपदेशः
४६ वैजयन्ती [ इमे आंध्रे मुद्रीकृताः ]

स्तोत्रग्रन्थाः

४७ विवर्णादिविष्णुसहस्रनामावली-सव्याख्या
४८ हकारादिहयग्रीवसहस्रनामावली-सव्याख्या
४९ परमात्मसहस्रनामावली–सव्याख्या
५० हयग्रीवाष्टोत्तरम्
५१ हयवदनशतकम्
५२ [तत्तद्वर्णादि] दशावतारस्तोत्राणि
५३ हयग्रीवनवरत्नमाला
५४ वीरराघवस्तुतिः
५५ रमावल्लभराजशतकम्
५६ गङ्गाष्टकाद्यष्टकानि
५७ सरस्वतीस्तोत्रम्
५८ वीरराघवस्तोत्रम्
५९ जनार्दनस्तोत्रम्
६० हनुमद्दण्डकम्
६१ हयग्रीवदण्डकम्

इमे आन्ध्रे मुद्रिताः



# चित्रकविताकलयोः प्रबलदुर्बलभावविचारः

आचार्यपट्टाभिरामशास्त्री

कविताकला चित्रकला च तुल्यां कोटिमारोहतः। सामाजिकानां सहृदयानाञ्च मनांस्यावर्जयितुमुभयोस्समानोऽधिकारः। सुवर्णरञ्जितानि शोभनानि चित्राणि निशाम्य सहृदयः चित्रकारं श्लाघते, तथैव सुवर्णघटितानि रसमयानि काव्यानि निशम्य सामाजिकः कवयितारं पुरस्करोति। एकत्र निशामनम् अपरत्र निशमनम् इति भिन्नेन्द्रियजन्य आस्वादः। एवमुभयोस्तौल्ये सत्यपि कविकुलललामस्य कालिदासस्य कवितायामनितरसाधारणं वैशिष्ट्यमनुभवामः। कुशलश्चित्रकारः कामं सुन्दराणि चित्राण्यविष्कुर्यात् किन्तु कविः कालिदासः कविताकलया तत्र प्राणान् सन्निवेशयति। चित्रकारेभ्यः चित्रलेखनाय सामग्रीः प्रयच्छति कालिदासकविता।

दर्भाङ्कुरेण चरणः क्षत इत्यकाण्डे तन्वी स्थिता कतिचिदेव पदानि गत्वा।
आसीद्विवृत्तवदना च विमोचयन्ती शाखासु वल्कलमसक्तमपि द्रुमाणाम्॥

इति पद्येन चित्रकाराय सामग्रीसम्पदं ददाति। किन्तु पद्यार्थमनुसन्दधानस्य सहृदयस्य हृदये सप्राणां शकुन्तलां स्थापयति। हृदये संस्थापितां शकुन्तलां कोमलतमे चरणे दर्भाङ्कुरवेधजनितवेदनामनुभवन्तीं पश्यन् सहृदयस्स्वयं वेदनामनुभवति। अत्र सहृदयश्चक्षुषी निमील्य पश्यति हृदयसन्निवेशितां नायिकाम्। चित्रगतान्तु तां चक्षुषी उन्मील्य पश्यन्ति चित्रद्रष्टारः। कविताकलायान्तु चक्षुःश्रोत्रयोरुभयोर्व्यापारः, चित्रकलायान्तु चक्षुष एवेति भेदः। अथवा कविताकलायाभन्तर्दृष्टेरापादने सामर्थ्यमिति विशेषः। पुरः पश्यन्नपि न पश्यति, अन्तः पश्यंश्च पश्यति इति स्थितिः खलु साधीयसी। तामिमां स्थितिमापादयति कालिदासकविता। यद्यपि चित्रकलायाः प्राथम्यम् उत कविताकलायाः? इति निर्द्धारणं दुश्शकम्। चित्राणि विलोक्य कवयति उत कवितां निशम्य चित्राण्यारचयति? इत्यवधारणं कठिनम्। तथापि कालिदासमतेन स्वस्य चित्रकारेभ्यस्सामग्रीप्रदानशक्तिमत्वेऽपि स्वकवितायाश्चित्राण्येवावलम्ब इति प्रतीयते। अत्र

चित्रे निवेश्य परिकल्पितसत्त्वयोगा,
रूपोच्चयेन मनसा विधिना कृता नु।

---

* ४/७ हनुमद्धट्टम्, वाराणसी।

स्त्रीरत्नसृष्टिरपरा प्रतिभाति सा मे,
धातुर्विभुत्वमनुचिन्त्य वपुश्च तस्याः ॥

इति पद्ये विमृश्यमाने प्रतिभाति–कविकर्तृकसृष्टौ लक्षणकारा आलङ्कारिका नियतिकृतनियमराहित्यमुपदिशन्ति । उपदेष्टॄणां तेषां लक्ष्यैकचक्षुषां वल्मीकजन्ममुनिकालिदासादिनिर्मितकाव्यान्येव लक्ष्याणीति स्थितौ विद्यमानायामपि ऋषिकल्पः कालिदासः नियतिकृतनियमानुल्लङ्घ्य कवयितुं नाभिलषतीव । चित्रविचित्रवस्तुनिर्माणकुशलस्य सर्वशक्तिमतो विधातुः महाचित्रकारस्य प्रभावं स्वसर्जनकर्मीभूतं तस्या वपुश्चानुचिन्त्य दुष्यन्तमुखेन श्रावयति 'स्त्रीरत्नसृष्टिरपरा प्रतिभाति सा' इति । कविप्रतिभोत्प्रेक्षामात्रेण कविसृष्टौ न सर्वजनसंवादो भवितुमर्हतीति 'रूपोच्चयेन' 'मनसा' 'विधिना' इति करणानि प्रदर्शयति । अहो ! कियद्विनयप्रदर्शनं कालिदासस्य ? कियच्च नियतिकृतनियमानुसरणशीलता । 'कविरेकः प्रजापतिः' इत्याभाणके सत्यपि स्वसृष्टे पदार्थे सत्त्वयोगः कविप्रजापतेस्सामर्थ्याद् बहिर्भूतः, तत्र च जगत्स्रष्टुरेव कौशलमिति स्वीकुर्वन् कालिदासो विधातरि विद्यमानं सामर्थ्यातिशयं प्रशंसति । एवञ्च कविताकलाया विधातृकृतचित्राण्येवावलम्ब इति कालिदासो मन्यत इव । यद्यपि बीजाङ्कुरन्यायेन ऋतुलिङ्गन्यायेन च मीमांसाशास्त्रसिद्धेन चित्रकविताकलयोः पूर्वापरभावो न सिध्यति, नापि साधयितुं शक्यते, तथापि कालिदासः चित्रकलाया एव प्राथम्यमभिप्रैतीव । कविस्तु शकुन्तलां साक्षाद्विलोक्य न वर्णयति, मनसा विधातुस्सृष्टिमनुचिन्त्य वर्णयतीत्यभ्युपगन्तव्यम् । चित्रकारस्य वा कवयितुर्वा स्वस्वकार्यारम्भात्पूर्वं 'जानाति इच्छति यतते करोति' इति नैयायिकाभिमतः क्रम एष्टव्यः । तत्र ज्ञानं यत्प्रथमं तत्कस्माज्जातमिति विचार्यमाणे विधातुस्सृष्टेरित्येव वक्तव्यं भवति । विधातृसृष्टिमवगत्य तदनुसारेण कवयितुमिच्छति तदनु यततेऽनन्तरञ्च कवयति । चित्रकारस्याप्ययमेव क्रमः । तथापि कालिदासकवितायामस्ति कश्चन विशेषः–नायिकायाः स्निग्धं वीक्षणम् नयनयोरन्यत्र प्रेरणं सविलासं गमनं सासूयं कथनञ्चेति वर्णयन् तथाविधामेकां कविस्सहृदयहृदयेऽवस्थापयति । चित्रकारस्तु वीक्षणस्य नयनयोरन्यत्र प्रेरणस्य गमनस्य भाषणस्य च भिन्नानि चित्राण्यालिख्य सहृदयमनस्समाकर्षको भवति । जीवन्त्या नायिकाया अनुभवः चित्रार्पितायाश्च तस्या अनुभवः । उभयोश्च महान् भेदः । कविस्तु सहृदयान् जीवन्तीं नायिकामनुभावयति, चित्रकारस्तु न तथेति भेदः । अतएव षष्ठेऽङ्के कविः कथयति—

साक्षात्प्रियामुपगतामपहाय पूर्वं,
चित्रार्पितां पुनरिमां बहु मन्यमानः ।…………जानः

इति । एवं कथयन्नपि कविश्चित्रगतां सुषमां न परित्यक्तुमभिलषति । नायिकाया यो यः प्रदेशोऽभिरूपः तं तमालिखितुमिच्छन् दुष्यन्तमुखेन ब्रवीति–'कार्या सैकतलीन - हंसमिथुना इत्यादि । दुष्यन्तश्चित्रफलके शकुन्तलायाश्चित्रं न लिलेख किन्तु कालिदासोऽलिखत् । दुष्यन्तद्वारा लेखितं चित्रं

सानुमतीमुखेन स्वयमेव कविः प्रशंसति–'अहो एषा राजर्षेर्निपुणता, जाने सख्यग्रतो मे वर्तत' इति । चित्रलेखनप्रकारमपि कविरुपदिशति —'तथापि तस्या लावण्यं रेखया किञ्चिदन्वितम्' इति । चित्रकाराः चित्रफलके स्वाभीप्सितमूर्तिलेखनाय प्रथमं रेखा विन्यस्यन्ति । रेखाविन्न्यास एव चित्रस्य प्राणाः । एवं रघुवंशे द्वितीयसर्गे 'चित्रार्पितारम्भ इवावतस्थे' तृतीये सर्गे बभूवुरालेख्यसमर्पिता इव' इत्यनेकेषु स्थलेषु आलेख्यमुपमिन्वानः कविः चित्रगतं वैशिष्ट्यमवबोधयति । उपमेयापेक्षयोपमानमधिकगुणं भवत्येव । सजीवानि चित्राणि हृदयेष्ववस्थापयन् कविवरः सहृदयानां चित्तवृत्तीर्निरुध्य चिरकालं सहृदयान् योगक्रियामभ्यसितुं प्रेरयति । भगवती गिरिजा प्रकृतिपेशला गिरीशप्रतिसक्तमानसा पितृभ्यां प्रतिषिद्धापि तपस्तप्तुं व्यवसितमतिः घोरं वनं प्रविश्याशुतोषं वशीकर्तुं तपस्तपति । तामस्माकं हृदयेषु चित्रयति कविः । ग्रीष्मसमयः, शिलामयः प्रदेशः, चतसृषु दिक्षु वह्नयः प्रज्ज्वलिताः, वियति भास्करस्तपति, कोमलशरीरं नितान्तं तप्तम्, वर्षारम्भे प्रथमोदविन्दवो भगवत्या उत्तमाङ्गे निपत्य क्षणं पक्ष्मस्ववस्थाय ततोऽधरे निपत्य ततस्तनमण्डलमतिकठोरमासाद्य चूर्णिताः त्रिवलीषु सम्बद्धाः चिरकालानन्तरं नाभिमासादयन्तीति वर्णयन् कविः तादृशं चित्रमस्माकं हृदयफलकेषु चित्रयति यच्च वयं कथमपि निस्सारयितुं न प्रभवामः ।

स्थिताः क्षणं पक्ष्मसु ताडिताधराः पयोधरोत्सेधनिपातचूर्णिताः ।
वलीषु तस्याः स्खलिताः प्रपेदिरे चिरेण नाभिं प्रथमोदबिन्दवः ॥

भारतीयसंस्कृतिप्रसारेण कालिदासः स्वकाव्येषु दत्तावधानो भवतीति तत्काव्यार्थजुषां न तिरोहितम् । देशस्य प्राणाः संस्कृतिः । तद्रक्षितुं कवेः मुख्यः प्रणवः । दूतकाव्यमारभमाणः कविः 'आषाढस्य प्रथमदिवसे' इति निर्दिशति । धनदसभायां यक्षो गणकः । नवां काञ्चन सुन्दरीमूढ्वाहर्निशं तदासक्तमनाः वैषयिकसुखोपभोगे लग्न आसीत् । इमां तस्य प्रवृत्तिमवबुध्य धनदः महतोऽनर्थात्कर्मण एनं निवर्तयितुं पत्नीविरहात्मकेन शापेन योजयामास । कर्कटकं भास्करे पतिपत्न्योस्सङ्गमो निषिद्धश्शास्त्रेषु । अस्मिन् ऋतौ यदि गर्भधारणं स्यात् तर्हि चैत्रो मासः प्रसवसमयस्स्यात् । तत्र पुंप्रसवः महतेऽनर्थाय कल्पते इति प्रवयसां नारीणां भारतीयानां निश्चयः । अतएव ताः स्वशय्यायामेव वधूः शाययित्वा संरक्षन्ति इत्यधुनापि जनपदेषु रीतिमवलोकयामः । यक्षस्य गृहे तथाविधा नार्यो नासन् । अयञ्चातिकामी । अस्य सङ्गमेन गर्भधारणं तस्या मा भूत् इत्याशयेन यक्षश्शप्तः । तामिमां संस्कृतिमुपदेष्टुमेव दूतकाव्यमारब्धवानिव कविरिति प्रतीयते । चैत्रमासे प्राप्तजन्मा श्रीदाशरथी रामः कतिविधान्युच्चावचानि कष्टान्यन्वभवत् इत्येकेकोऽपि भरतभुवि जनिमातस्थितवान् जानात्येव । रामवद्वर्तितव्यमस्माभिः न तु तद्वत् कष्टान्यनुभवितव्यानि । किञ्च सन्ततिवृद्धिर्निरोढव्या इत्यत्राषाढमासोऽमुख्यस्समयः । यथा पर्वकालः सङ्क्रान्तिदिनम्, पितृपक्ष एकादशी इत्यादयस्तिथयो निषिद्धाः सङ्गमाय तथायं मासोऽपीति कविरुपदिशति । सन्तति-

निरोधायेदानीं वयं किं किं न कुर्मः । भ्रूणहत्यासु निस्सङ्कोचं प्रवर्तामहेऽनुदिनम् । अद्यापि भारते यदीमां संस्कृतिं प्रसारयामस्तर्हि नैवैतादृशानि कुकर्माणि कर्तव्यानि भवेयुः । महर्षिभिर्निषिद्धानि दिनानि परित्यजन्ताम्, कविनिर्दिष्टोऽयमेको मासस्सर्वैरेव भारतीयैर्वर्जितस्स्यात् यदि देशोऽयं क्षेमसुभिक्षस्स्यादिति महाकवेराशयः । इममाशयं कविश्शाकुन्तले शास्त्रदृष्ट्या विशदयति—

यथातेरिव शर्मिष्ठा भर्तुर्बहुमता भव ।
सुतं त्वमपि सम्राजं सेव पूरुमवाप्नुहि ॥

इत्यस्मिन् पद्ये मीमांसान्यायदृष्ट्या विचार्यमाणेऽयमर्थः स्फुरति–यत् पश्वेकत्वन्यायं कविरत्र सञ्चारयतीति । अनेन न्यायेन विधेयगतविशेषणं सङ्ख्यादिकं विवक्षितमित्यवधार्यते । प्रकृते महर्षिः कण्वः शकुन्तलामुद्दिश्य सुतावाप्तिं विदधाति—सम्राट्सुतावाप्त्या पूर्णकामा त्वं भवेति । अत्रावाप्तिक्रियायाम् एकत्वविशिष्टस्सुतोऽवाप्तव्य इति सिध्यति । एवं सूक्ष्मदृष्ट्यानुसन्धीयमाने कविरार्तिं पर्यवेक्ष्य यत्प्रोवाच तदनुसारेणास्माकं स्थितिश्चेत् तर्हि, 'आवां द्वौ अस्मदीयौ द्वौ' इति प्रचारस्य बहुव्ययसाध्यस्यावसरो न भवेदिति प्रतीयते ।

———

# पुराणानां प्राथमिकं स्वरूपम्

▢
पं० राजारामपाण्डेयः
▢

पुराणानां विकासक्रमे विशेषरूपेण द्वे धारे लक्षिते भवतः। एका व्यासपूर्वधारा, द्वितीया च व्यासोत्तरधारा। यथा व्यासात् पूर्वं वेद एक एवासीत् तथैव पुराणमपि एकमेवासीत्, यस्मिन् शतकोटिः श्लोका आसन्। पश्चात् भगवता व्यासेन तेषामभिप्रायान् चतुर्लक्षश्लोकेषु सङ्कलय्य अष्टादशभागेषु च विभज्य अष्टादशनामानि कृतानि, यानि अद्यत्वे प्रचलितानि अष्टादशपुराणानि प्रोच्यन्ते। यस्य स्पष्टं सङ्केतोऽस्माभिः विभिन्नेषु पुराणेषु प्राप्यते।

स्कन्दपुराणे लिखितमस्ति यद् व्यासात्पूर्वं पुराणमेकमेवासीत्, यत् त्रिवर्ग-( धर्मार्थकाम ) साधनमासीत्, यत्र शतकोटिश्लोका आसन्। कल्पस्यारम्भे चतुर्मुखेन ब्रह्मणा तेषां स्मरणं कृत्वा महर्षीन् प्रति प्रोक्तम्। अतः पुराणं प्रति सर्वेषां शास्त्राणां प्रवृत्तिर्जाता। समयपरिवर्तनेनैतावतो विशालकायस्य पुराणसाहित्यस्य ग्रहणं स्वल्पसामर्थ्यशालिनोऽल्पबुद्धेश्च मानवस्य कृते साध्यं नासीदतो द्वापरान्ते भगवान् विष्णुः व्यासरूपेणावतीर्य मनुष्याणां कल्याणार्थं तद् विशालं पुराणसाहित्यं चतुर्षु लक्षेषु श्लोकेषु संक्षिप्याष्टादशसु भागेषु विभक्तवान्। यद्यपि भूतले उपलभ्यते। शतकोटि-प्रविस्तरमादिपुराणमद्यत्वेऽपि देवलोके विद्यते —

पुराणमेकमेवासीदस्मिन् कल्पान्तरे मुने। त्रिवर्गसाधनं पुण्यं शतकोटिप्रविस्तरम्॥
स्मृत्वा जगाद च मुनीन् प्रति देवश्चतुर्मुखः। प्रवृत्तिः सर्वशास्त्राणां पुराणस्याभवत्ततः॥
कालेनाग्रहणं दृष्ट्वा पुराणस्य ततो मुनिः। व्यासरूपं विभुः कृत्वा संहरेत् स पुनःपुनः॥
चतुर्लक्षप्रमाणेन द्वापरे द्वापरे सदा। तदष्टादशधा कृत्वा भूर्लोकेऽस्मिन् प्रभाष्यते॥
अद्यापि देवलोके तच्छतकोटिप्रविस्तरम्। तदर्थोऽत्र चतुर्लक्षं संक्षेपेण निवेशितम्॥

( स्कन्दपुराणे रेवाखण्डे १/२४-२९ )

अस्यैव पुष्टिः विभिन्नैः पुराणैः किञ्चिच्छब्दपरिवर्तनेन सह कृताऽस्ति। मत्स्यपुराणे लिखित-मस्ति यत् लोकपितामहेन ब्रह्मणा सर्वेषां शास्त्राणां निर्माणात् पूर्वं पुराणानां स्मरणं कृतम्, तदनन्तरं

---

* प्राचार्यः-सरस्वतीसंस्कृतमहाविद्यालयस्य, भदोही, वाराणसी।

तस्य मुखेभ्यो वेदानामाविर्भावो जातः। यदा ब्रह्मणा पुराणस्मरणं कृतं तदा शतकोटि-श्लोकविस्तरं पुण्यप्रदं धर्मार्थकामप्रदं तत्पुराणमेकमेवासीत्। अग्रे जनानां पुराणं प्रति अभिरुचिमालोक्य स्वयं परब्रह्मपरमात्मना द्वापरान्ते व्यासरूपेणावतीर्य तत् शतकोटिप्रविस्तरं पुराणं चतुर्लक्षश्लोकेषु परिवर्त्य अष्टादशविभागेषु प्रविभज्य पृथिव्यां प्रकाशितं, किन्तु शतकोटिश्लोकैर्निबद्धं तत्पुराण-मद्यापि देवलोके वर्तते —

पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणा स्मृतम्। अनन्तरं च वक्त्रेभ्यो वेदास्तस्य विनिर्गताः॥
पुराणमेकमेवासीत्तदा कल्पान्तरेनघ। त्रिवर्गसाधनं पुण्यं शतकोटिप्रविस्तरम्॥
कालेनाग्रहणं दृष्ट्वा पुराणस्य ततो नृप। व्यासरूपमहं कृत्वा संहरामि युगे युगे॥
चतुर्लक्षप्रमाणेन द्वापरे द्वापरे सदा। तथाष्टादशधा कृत्वा भूलोकेऽस्मिन् प्रकाश्यते॥

—( मत्स्यपुराणे ५३/३, ४, ९, १०, ११ )

अक्षरशोऽस्यैव समर्थनं सृष्टिखण्डीय—( १।४५/५०-५३ ) पद्मपुराणवचनैरपि भवति। समेषामेषां सारसंग्रहो भविष्यपुराणे एवमस्ति—

अद्यापि देवलोकेऽस्ति शतकोटिप्रविस्तरम्। तदर्थोऽत्र चतुर्लक्षं संक्षेपेण विशेषितम्॥
पुराणमेकमेवासीत् सर्व-कल्पेषु मानद। चतुर्वर्गस्य बीजं च शतकोटिप्रविस्तरम्॥
कालेनाग्रहणं दृष्ट्वा पुराणस्य महामतिः। हरिर्हि व्यासरूपेण जायते च युगे युगे॥
चतुर्लक्षप्रमाणेन द्वापरे द्वापरे सदा। तदष्टादशधा कृत्वा भूर्लोके निर्दिशत्यपि॥
अद्यापि देवलोकेषु शतकोटिप्रविस्तरम्। अस्त्येव तस्य सारस्तु चतुर्लक्षेण वर्ण्यते॥

( भविष्यपुराणे ९२/२२-२६ )

स्कन्दपुराणस्य नागरखण्डेऽङ्कितमस्ति यत् शतकोटिकं पुराणं पूर्वमेकमेवासीत्। अनन्तरं द्वापरे नारायणस्यांशसमुद्भवेन वेदव्यासेन तद् अष्टादशभागेषु विभज्य लोके प्रचारितम्—

एकमेव पुरा ह्यासीत् पुराणं शतकोटिधा। ततोऽष्टादशधा कृत्वा वेदव्यासो युगे युगे॥
प्रख्यापयति लोकेऽस्मिन् साक्षान्नारायणांशजः। ( स्कन्दपुराणीयनागरखण्डे २।८ )

देवीभागवतेऽपि लिखितमस्ति यद् भगवान् विष्णुः कलिजीवान् अल्पायुषः स्वल्पबुद्धींश्चा-लोक्य व्यासरूपेणावतीर्य प्रतिद्वापरं वेदपुराणं संकलयति—

द्वापरे द्वापरे विष्णुर्व्यासरूपेण सर्वदा। वेदमेकं स बहुधा कुरुते हितकाम्यया॥
अल्पायुषोऽल्पबुद्धींश्च विप्रान् ज्ञात्वा कलावथ। पुराणसंहितां पुण्यां कुरुतेऽसौ युगे युगे॥

( देवीभागवते १।३/१९-२० )।

एवं वर्तमानानामष्टादशानां पुराणानां निर्माणस्य श्रेयः महर्षिकृष्णद्वैपायनव्यासस्यैवास्ति, येन देवलोकेऽद्यापि विद्यमानस्य शतकोटिप्रविस्तरस्य मूलपुराणस्य सारं संगृह्य चतुर्लक्षश्लोकद्वारा

अष्टादशपुराणरूपेण संग्रन्थ्य मानवमात्रस्य परमं कल्याणं कृतम् । तात्पर्यमिदमस्ति यद् यथा एकस्यैव वेदस्य ऋग्यजुःसामाथर्वरूपेण भेदं मत्वा चत्वारो वेदा इति व्यवहारो भवति तथैव शतकोटि-प्रविस्तरस्यैवैकस्यापि आदिपुराणस्य संक्षेपं कृत्वा ब्रह्मपुराण-पद्मपुराण-विष्णुपुराणादिनाम्ना अष्टादशपुराणानीति व्यवहारो जायते ।

सत्ययुगस्यारम्भे वेदात्पूर्वं ब्राह्मणा यस्य पुराणस्य स्मरणं कृतमासीत्तत् शतकोटि-प्रविस्तरमेकमेव पुराणमासीत् । ब्रह्मद्वारा स्मरणात् अस्य पुराणस्यैकं नाम ब्राह्मं ब्रह्माण्डं वा पुराणेषूपलभ्यते—

ब्राह्ममेव कृतं चाद्यं पुराणं श्रुतिसारगम् ।

( वि० पु० वि० व्या० ३।६/१४ ) ।

एवमेव पुरा ह्यासीद् ब्रह्माण्डं शतकोटिधा ।

( स्क० पु० प्र० ख०० २/८ ) ।

प्रथमं शतकोटिप्रविस्तरं पुराणमेकमेवासीदतो वेदे उपनिषदि च पुराणशब्दस्य एकवच-नान्त एव प्रयोग उपलभ्यते ।

विष्णुपुराणस्य विप्रचित्तिव्याख्यायां लिखितमस्ति यत् सत्ययुगे ब्रह्मणा वेदस्मरणात् पूर्वं यस्य ब्राह्मसंज्ञकस्य शतकोटिप्रविस्तरस्य पुराणस्य स्मरणमं कृतमासीत्, त्रेतायुगे तस्यैव संक्षेपं विधाय ब्रह्मादिभिरष्टादशभिर्महर्षिभिः ब्रह्म-पद्मादीनि अष्टादशनामानि कृतानि, पुनः द्वापरे वेदव्यासो हि तेषां संग्रहं कृत्वा ग्रन्थाकारेणाष्टादशभागान् विभज्य स्वं परमं प्रियं शिष्यं लोमहर्षणमध्यापयामास ।

कृतयुगे वेदात्पूर्वं ब्रह्मणा स्मृतस्य शतकोटिप्रविस्तरस्य ब्रह्मसंज्ञकस्य पुनः त्रेतायां ब्रह्माद्य या ष्टाद्शर्षिभिः संक्षिप्य ब्राह्मपाद्मेत्याद्यष्टादशात्मना विभक्तस्य पुनः द्वापरान्ते संगृह्य अष्टादश-पुराणसंहितां कृत्वा लोमहर्षणं सूतमध्यापयामास ।

( वि० पु० वि० व्या० ३।५।१५ )

पुराणानामुपक्रमोपसंहारयोरध्ययनेन मत्स्य–नारदीयपुराणादिसूचीपारायणेन च स्पष्टं प्रतीयते यत् प्रायः समेषां पुराणानां सम्बन्धो ब्रह्मणा तन्मानसपुत्रैश्च सहास्ति । एवं स्थितौ अग्रे तेषां शिष्य-प्रशिष्य-तच्छिष्यैश्च तत्तत्संवादानामादिश्रोतृवक्तृमाध्यमेन वर्तमानपुराणरूपं प्रदत्तम् ।

यथा वेदाः सन्ति अपौरुषेयाः, गौतमवशिष्ठात्रिकश्यपवामदेवादय ऋषयो वेदमन्त्राणां द्रष्टारः सन्ति, न तु कर्तारः, तथैव पुराणानां मौलिकसामग्र्या कर्ता कोऽपि नास्ति, किन्तु वेदप्रति-पादितपुराणस्मर्ता ब्रह्मदेवोऽस्ति तथा वक्तारो नैके ऋषयः सन्ति, तात्पर्यमिदमस्ति—ये ऋषयो वेदस्य द्रष्टारः सन्ति त एव पुराणस्यापि स्मर्त्तारो वक्तारश्च सन्ति । यथा वेदस्यारम्भो ब्रह्मणो-ऽस्ति तथैव पुराणस्याप्यारम्भोऽपि ब्रह्मण एव । परं वैशिष्ट्यञ्चेदमेवास्ति यद् मन्त्रोपदेशात् पूर्वं

विनियोगस्यावश्यकता भवति, विनियोगस्य च पूर्णतायै ऋषिदेवताछन्दसां चरित्रस्य च ज्ञानमत्यावश्यकं भवति। अतः प्रथमं पुराणे ज्ञाते सत्येव मन्त्रोपदेशः सफलो भवितुमर्हति, नान्यथा। अनेनैवाभिप्रायेण पुराणेषु प्रोक्तमस्ति। यत्तत्सर्वप्रथमं ब्रह्मणो मुखात् पुराणमेव निःसृतं तदनन्तरं तस्य मुखाद् वेदाः प्रादुर्भूताः।

पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणा स्मृतम्। अनन्तरं च वक्त्रेभ्यो वेदास्तस्य विनिर्गताः॥

( मत्स्यपुराणे ५२/३ )

तात्पर्यमिदमस्ति यद् वेदमन्त्रोपदेशसमयेऽकश्चिदपि वैदिको विद्वान् प्रथमं शिष्यं विनियोगं बोधयति। विनियोगश्च तदैव सफलो भवितुमर्हति यदा ऋषीणां देवतानां च चरित्रज्ञानं स्यात्। अतः पुराणपठनानन्तरमेव वेदाध्ययनस्यावसर आगच्छति। अतएव प्रथमं ब्रह्मद्वारा पुराणस्य स्मरणं ततो वेदाध्ययनं न्यायसंगतं प्रतीयते। एतेनेदं सिद्ध्यति यत् पुराणानां मौलिकसामग्र्याः प्रथमः स्मर्त्ता ब्रह्मैवास्ति तथा तत्प्रवचनकर्तारो ब्रह्मणो मानसाः पुत्रा मन्त्रद्रष्टारो महर्षयः सन्ति।

वस्तुतः प्रथमं वेदानामेवाविर्भावो जातः, तदनन्तरं वेदार्थोपबृंहणार्थं तथा वेदानधिकारिणां ज्ञानोपदेशनिमित्तं पुराणानां रचना जाता। अतएवानुपनीतानां बालकानामुपनयनसंस्कारात्पूर्वं पौराणिकस्तोत्रादीनां पठनस्य व्यवस्था विद्यते सभ्यसमाजे। तथोपनयनसंस्कारानन्तरं वेदारम्भः क्रियते। एवं परम्परा शिष्टजनेषु अद्यत्वेऽपि दृश्यते।

—तथा च सृष्टेरारम्भकालतो व्यासात् पूर्वमितस्ततः प्रकीर्णं शतकोटिप्रविस्तरं पुराणं गुरुशिष्यपरम्परया उपदिष्टं भवतिस्म, किंतु द्वापरान्ते आगन्तुककलिकालकुप्रभावात् वेदपुराणयोर्लोपाशङ्कया साक्षात् परब्रह्मपरमात्मना व्यासरूपेणावतीर्य यथा-याज्ञिकमन्त्रान् संकलय्य ऋग्यजुःसामाथर्वनाम्ना वेदो विशालकायश्चतुर्भागेषु विभक्तस्तथा अद्यत्वेऽपि ब्रह्मलोके वर्तमानस्यादिपुराणस्य सारं संक्षिप्य चतुर्लक्षश्लोकेषु परिणमय्याष्टादशभागेषु विभज्य च ब्रह्मपद्मादीनि पुराणनामानि कृतानि। येन वेदानधिकारिणोऽपि भावुका जना अष्टाविंशतितमेऽस्मिन् कलियुगे वेदामृतस्य पानं सौकर्येण कुर्युः।

श्रीमद्भागवते लिखितमस्ति यद् ब्रह्मादिदेवैरिन्द्रादिदिक्पालैश्च धर्मरक्षार्थं प्रार्थितेन स्वयं नारायणेन आगन्तुकस्य कलेर्मनुष्यान् अल्पायुषोऽल्पबुद्धींश्च ज्ञात्वा महर्षिपराशरद्वारा मत्स्योदरीगर्भाद् व्यासरूपेणावतीर्य पञ्चसहस्रवर्षपूर्वं चत्वारो वेदा लेखबद्धाः कृताः—

क्षीणायुषः क्षीणसत्वान् दुर्मेधान् वीक्ष्य कालतः। ब्रह्मेशाद्यैर्लोकपालैर्याचितो धर्मगुप्तये॥

पराशरात् सत्यवत्यामंशांशकलया विभुः। अवतीर्णो महाभाग वेदं चक्रे चतुर्विधम्॥

( श्रीमद्भागवते १२/६/४८, ४९ )

एवं महर्षिणा व्यासेन विकीर्णं वेदं चतुर्षु भागेषु विभज्य अध्ययनसौविध्याय सुरक्षायै च विभिन्नेभ्यः पैल—वैशम्पायनजैमिनी–सुमन्तुभ्यः शिष्येभ्यो वितीर्णः। तदनन्तरं तेषां शिष्यप्रशिष्यतच्छिष्यपरम्परया वेदा अनेकशाखिनोऽभवन्।

चतुर्णां वेदानां संकलनानन्तरं महर्षिणा व्यासेन वेदवर्णितसृष्टिप्रलयादिप्रतिपादकमन्त्राणां संग्रहं कृत्वा आख्यानोपाख्यानगाथाकल्पशुद्धिभिः देवर्षि-राजर्षि-महर्षिप्रभृतीनां—चरित्रं सम्वादं चावश्यकतानुसारं संक्षिप्य विशदय्य वा स्वकविताचातुरीद्वारा सुगमं सरलं मनोहरं च निर्माण-जागरितेतिहासस्वरूपं प्रदाय विषयक्रमेण अष्टादशभागेषु विभज्य अष्टादशमहापुराणानि अस्माकम-क्षिलक्ष्यीकृतानि । एवं शतकोटिप्रविस्तरश्लोकानां तात्पर्यं विषयविभागानुसारं मौलिकरूपेण चतुर्लक्षश्लोकेषु सम्बद्धीकरणं व्याससदृशस्यापूर्वप्रतिभाशालिनः सर्वज्ञस्य दिव्यदृष्टेः असम्प्रज्ञात-समाधिद्वारा अनन्यसुलभप्रज्ञासम्पन्नस्य अवतारिणो महापुरुषस्य चतुरप्रतिभाया एव परिणामोऽस्ति । अस्यैव स्पष्टीकरणं मत्स्यपुराणे कृतमस्ति ।

श्रीमद्भागवते सूतेनोक्तमस्ति यद्भगवता वेदव्यासेन यथा वेदरक्षाया भारः पैलादिभ्यः शिष्येभ्यः प्रदत्तस्तथैव पुराणेतिहासस्य रक्षाया भारो मम जनके लोमहर्षणनामके सूते निहितः स हि षट्संख्यकान् अत्र्यारुणि-कश्यप-सावर्णि-अकृतव्रण-वैशम्पायन-हारीतनामकान् शिष्यान् प्राध्याप-यद्, ये षट् पौराणिकाः प्रोच्यन्ते ।—

इतिहासपुराणानां पिता मे लोमहर्षणः । अत्र्यारुणिः काश्यपश्च सावर्णिरकृतव्रणः ॥
वैशम्पायनः हारीतो षट् वै पौराणिका इमे । अधीयन्त व्यासशिष्यात् संहितां मत्पितुर्मुखात् ॥
( श्रीमद्भागवते १२।७/५-६ )

# शूद्रकविरचितस्य मृच्छकटिकस्य समीक्षणम्

डॉ० ज्योत्स्ना गुप्ता*

शूद्रकमहाभागविरचितं मृच्छकटितं नाम प्रकरणं दशस्वङ्केषूपनिबद्धं शृङ्गाररसप्रधानं कैशिकीं वृत्तिमवलम्ब्य प्रवर्तते। तदिदं नाटकं शूद्रकविरचितमन्यस्य वा कस्यचिदिति विदुषामपि विवादास्पदम्। केचिद्दण्डीप्रणीतममुमपरे च भासप्रणीतमभिमन्यन्ते। मन्येऽस्य प्रस्तावनायां निर्दिष्टं—"लब्ध्वा चायुः शताब्दं दशदिनसहितं शूद्रकोऽग्निं प्रविष्टः" विलोक्येवास्य ग्रन्थस्य रचयिता संशयदोलामधिरोहति। नैव कश्चिदपि स्वमृत्युवर्णने शक्तः। सत्स्वपि युक्तिप्रत्युक्तिषु बहुमतेन शूद्रक एवास्य नाटकस्य प्रणेतृत्वेनाङ्गीक्रियते। प्रबन्धपर्यालोचनेन च ज्ञायते सोऽयं महाभागो दाक्षिणात्यः वराहमिहिरात् पूर्ववत्युत्तरवर्ती च भासाद् वर्तते। कविवरोऽयं शूद्रकः लोकवेदोभयसाहित्यस्य मार्मिको विद्वान् यज्ञयागादिकर्मकलापानुष्ठाता। चरमे वयसि पुत्रं राजसिंहासने प्रतिष्ठाप्याश्वमेधयज्ञं महता संमारम्भेण निवर्तयामास। यज्ञान्ते च तत्रैवाग्निं प्रविष्टः।

अस्यां च तत्कृतौ द्विजसार्थवाहस्य चारुदत्तस्य गुणानुरक्तायाः गणिका—वसन्तसेनायाश्च सवसुरतोत्सवमुपनिबद्धम्। नाट्यनियमाऽनुगुण्येन काव्यस्य नाम नायकमनुसृत्य नायिकामनुसृत्य प्रमुखघटनां वावलम्ब्य क्रियते। उत्तररामचरितम् अभिज्ञानशाकुन्तलं वेणीसंहारश्चात्र निदर्शनम्। उक्तञ्चापि साहित्यदर्पणे—

"नाम कार्यं नाटकस्य गर्भितार्थप्रकाशकम्" नानाविधप्रमुखघटनासंवलितेऽप्यस्मिन् किं वैशिष्ट्यं मृत्तिकाशकटिकावृत्ते यत्तमनुसृत्य कविः स्वनाटकस्य संज्ञां चकार। केषाञ्चिन्मते—भासप्रणीतस्य दरिद्रचारुदत्तस्य कथावस्तु अवलम्ब्य प्रवर्तत एतन्नाटकम्। उभयत्र अङ्कचतुष्टयस्य कथा समा। पुनः स्वप्रातिभशक्त्योर्वरकल्पनया आर्यकगोपालकस्य कथांशमभ्यूह्य मृच्छकटिकसौवर्णशकटिकवृत्तञ्च निबद्धय कविना निर्मितमिदं प्रकरणम्, तेन यतः परिवर्धितमभ्यूहितञ्च वृत्तं तत आदाय कविना नाटकनामकरणं कृतम्। सत्येवं किमर्थं सौवर्णशकटिकं नामधेयं न धृतम्? मन्ये एतन्नामात्र विहितानां पात्राणामसन्तोषं द्योतयति। चारुदत्तस्य सूनुः रोहसेनो यथा मृत्तिकायाः

* सढौरा, अम्बाला, हरियाणा।

शकटं परिहृत्य सौवर्णशकटिकामभिलषते तथैव चारुदत्तोऽपि पातिव्रतगुणसम्पन्नायाः धूताया अपरितुष्य वसन्तसेनासमागमं कामयते वसन्तसेना च समुपस्थितं शकारं तिरस्कृत्य गुणवन्तं दरिद्रं चारुदत्तमाकाङ्क्षते । इत्थञ्च सर्वे स्वकीयतृष्णयैव कष्टतरामवस्थां प्रतिपद्यन्ते ।

तदिदं नाटकं समस्तसंस्कृतनाटकेषु सुमहद् वैशिष्ट्यं बिभर्ति । रूपकस्य दशभेदेषु तावदिदं प्रकरणसंज्ञां धारयति ।

धनञ्जयः प्रकरणस्य लक्षणमाचष्टे—

**अथ प्रकरणे वृत्तमुत्पाद्यं लोकसंश्रयम् । अमात्यविप्रवणिजामेकं कुर्याच्च नायकम् ॥**
**धीरप्रशान्तं सापायं धर्मकामार्थतत्परम् । शेषं नाटकवत् सन्धिप्रवेशकरसादिकम् ॥**
**नायिका तु द्विधा नेतुः कुलस्त्री गणिका तथा। कुलजाभ्यन्तरा बाह्या वेश्या नातिक्रमोनयोः ॥**

नाट्यनियमानुगुण्येनास्मिन् प्रकरणे लोकसंश्रयं कविकल्पितं वृत्तम् । धीरशान्तस्तु सापायो धर्मकामार्थतत्परो द्विजसार्थवाहश्चारुदत्तोऽत्र नायकः । चारुदत्तभार्या धूताऽत्र कुलजाऽभ्यन्तरा नायिका । वसन्तसेना च गणिका बाह्या नायिका । लुब्धो धीरोद्धतः स्तब्धः पापकृद् व्यसनी रिपुः शकारोऽत्र प्रतिनायकः । दर्पमात्सर्यभूयिष्ठत्वं चण्डत्वमनवस्थितत्वं छद्मविकत्थनशीलत्वञ्चास्य धीरोद्धतत्वे हेतुः । अष्टविधेषु श्रृङ्गारवीररौद्रादिरसेष्वेकः श्रृङ्गारः रसोऽत्राङ्गी अङ्गाश्चान्ये ।

सर्वेष्वपि रूपकेष्वादौ मङ्गलाचरणं विधीयते । उक्तञ्च यतः महाभाष्यकारेण—"मंगलादीनि हि शास्त्राणि प्रथन्ते वीरपुरुषाणि च भवन्ति" अवसाने च भरतवाक्यं पठ्यते मङ्गलाचरणं पूर्वरङ्गनाम्नाप्यभिधीयते । अस्य नान्दी- प्रस्तावना–प्ररोचनादीन्यङ्गानि च भवन्ति । सूत्रधारः भारतीं वृत्तिमाश्रित्य सामाजिकेभ्यः कविपरिचयं निर्दिशति येन सामाजिकाः काव्यरसंसमास्वादयितुमुन्मुखीभवेयुः । पुनश्च नाट्यवस्तु बीजरूपेण निर्दिशति । अस्मिन् "ह्येतद् कविः किल शूद्रको बभूव" इत्यनेन प्ररोचनानाम्नी प्रस्तावना विहिता । सर्वाण्यपि रूपकाणि वस्तु नेता रसभेदाद् भिद्यन्ते ।

## नाट्यवस्तु

वस्तु द्विविधमाधिकारिकं प्रासंगिकञ्च प्रधानवृत्तमाधिकारिकम्, अङ्गं प्रासङ्गिकं विदुः । प्रासङ्गिकञ्च वृत्तं पुनर्द्विविधम्–पताकाप्रकरीभेदात् । दूरं यदनुवर्तते कथांशेन सा पताका, अल्पं या सा प्रकरी। तदस्मिन् चारुदत्तवसन्तसेनयोः प्रणयप्रसंगः आधिकारिकम्, पालकार्यकयोःकथानकं प्रासंगिकम् । पञ्च अर्थप्रकृतयः बीज-बिन्दु-पताका-प्रकरीकार्यलक्षणाः । पञ्च च आरम्भ-यत्न-प्राप्त्याशानियताप्तिफलागमाः कार्यावस्थाः । एतयोः संवलनेन मुख-प्रतिमुख-गर्भावमर्श-निर्वहण-पञ्चसन्धियुतं नाट्यशरीरं निष्पद्यते । तद्यथा—बीजारम्भसमन्वयान्मुखसन्धिः । बिन्दुप्रयत्नानुगमाद् प्रतिमुखसन्धिः । पताकाप्राप्त्याशासम्भवो गर्भसन्धिः । प्रकरीनियताप्तिसंवलनादवमर्शसन्धिः । कार्यफलागमान्निर्वहणसन्धिः । स्तोकोद्दिष्टः कार्यसाधकः पुरस्तादनेकप्रकारं विस्तारी बीजवद् बीजम् यथाऽत्र "एषा गर्भदासी

कामदेवतायतनात् प्रभृति तस्य दरिद्रचारुदत्तस्य अनुरक्ता" इत्यस्यां शकारोक्तौ बीजनिक्षेपः। अवान्तरार्थविच्छेदे बिन्दुरच्छेदकारणम्। यथास्य द्वितीयेऽङ्के द्यूतकरकथांशेन कथाविच्छेदे कर्णपूरकेण चारुदत्तस्य प्रावारकग्रहणात् पुनः कथांशस्याविच्छेदः। तस्मात् कर्णपूरकवृत्तमत्र बिन्दुः। आधिकारिककथांशेन दूरं यदनुवर्तते सा पताका। तदत्र शर्विलकमदनिकावृत्तं पताकारूपेणोपन्यस्तम्। यदल्पं सा प्रकरी। तत् षष्ठेऽङ्के वीरकचन्दनकवृत्तं नवमेऽङ्के च शाक्यश्रमणकवृत्तं नाट्यविग्रहस्य प्रकरी। नाटकस्य फलपर्यन्ततां नीतः फलागमः कार्यः सोऽत्र वसन्तसेनायाः वधूरूपेणावाप्तिः कार्यरूपेण निर्दिष्टा।

भूयसे फललाभाय औत्सुक्यमात्रमारम्भः तदत्र प्रथमेऽङ्के "आश्चर्यम् जातिकुसुमवासितः प्रावारकः--मन्दभागिनी खल्वहं तवाभ्यन्तरस्य" इत्यनेन वसन्तसेनाया औत्सुक्यं, "प्रविश गृहमिति प्रतोद्यमाना न चलति भाग्यकृतां दशामवेक्ष्य" इत्यस्मिन् च चारुदत्तस्यौत्सुक्यं प्रकाशते। फलस्याप्राप्तौ योऽतित्वरान्वितः उपायो विधीयते स प्रयत्नः। तदत्र वसन्तसेनाया अलंकारन्यासादारभ्य तस्या दुर्दिनेऽभिसरणं यावत् फलप्राप्त्यर्थं प्रयत्नो दृश्यते। उपायापायशङ्काभ्यामनिर्धारितैकान्ता फलप्राप्तिः प्राप्त्याशा। सा च वसन्तसेनायाः शकटिकारोहणादारभ्य चारुदत्तस्य प्राणपरित्राणार्थं समागतायाः "आर्य! एषा अहं मन्दभागिनी यस्याः कारणादेष व्यापाद्यते' यावद् प्रदर्शिता। अपायाभावान्निर्धारितैकान्ता फलप्राप्तिर्नियताप्तिः। चारुदत्तस्य "का पुनस्त्वरितमेषा सपतता चिकुरभारेण" इत्युक्तौ चारुदत्तस्य प्राणपरित्राणे वधस्थले वसन्तसेनाऽऽगमनान्नियताप्तिः सुनिश्चिता। समग्रफलसम्पत्तिः कार्ययोगः फलागमः। तदत्र "आर्ये वसन्तसेने! परितुष्टो राजा वधूशब्देनानुगृह्णाति" इति शर्विलकस्योक्त्या फलागमो ज्ञायते।

यत्र नानाविधरससंवलितस्य बीजस्योत्पत्तिर्दृश्यते तत्र मुखसन्धिः। यथा वसन्तसेनायाः-'चतुरो मधुरश्चायमुपन्यासः' उक्तिं यावन्मुखसन्धिर्दृश्यते। यत्र बीजः किञ्चिल्लक्ष्यते क्वचिच्च न वा लक्ष्यते तत्र प्रतिमुखसन्धिः। यथाऽत्र वसन्तसेनोक्तात्—'यद्येवमार्यस्यानुग्राह्या' आरभ्य तस्याश्चारुदत्तं प्रत्यभिसरणं यावद् लक्ष्यालक्ष्यबीजत्वात् प्रतिमुखसन्धिः। यत्र दृष्टनष्टस्य बीजस्य पुनः पुनरन्वेषणं क्रियते तत्र गर्भसन्धिः। वसन्तसेनायाः पुष्करण्डोद्यानं प्रति गमनादारभ्य दशमेऽङ्के चाण्डालहस्तात् खड्गस्खलनं यावद् गर्भसन्धिर्दृश्यते। यत्र क्रोधाद् व्यसनाद् विलोभनाद् वा फलप्राप्तिविषये विमर्श्यते सोऽवमर्शसन्धिः। दशमाऽङ्कस्य 'त्वरितं का पुनरेषा' इति चाण्डालोक्तादारभ्य 'आश्चर्यं पुनरुज्जीवितोऽस्मि' इनि शकारोक्ति यावदवमर्शसन्धिः। यत्र बीजवन्तो मुखाद्यर्था यथायथं विप्रकीर्णाः फलागमायैकार्थ्यमुपनीयन्ते तन्निर्वहणम्। दशमेऽङ्के "नेपथ्ये कलकलः" एषाऽऽर्यचारुदत्तस्य वधूः—इत्यत आरभ्य नाटकस्यावसानं यावन्निर्वहणसन्धिर्न्यस्तः।

नेता

विनीतो मधुरस्त्यागी दक्षः प्रियंवदो रक्तलोकः शुचिः वाग्मी रूढवंशः स्थिरो युवा बुद्ध्युत्साहस्मृतिप्रज्ञाकलामानसमन्वितो दृढस्तेजस्वी धार्मिको धीरप्रशान्तोऽत्र चारुदत्तो नायकः।

धनदरिद्रोऽप्यसौ न गुणदरिद्रः । तेनैव प्रकरणे—"दीनानां कल्पवृक्षः" सम्बोधनेन सभाजितः । प्राक्तनीयः भृत्योऽप्यस्य संवाहकः -'यस्तादृशः प्रियदर्शनः प्रियवादी दत्वा न कीर्तयति, अपकृतं विस्मरति, दक्षिणतया परकीयमिवात्मानमवगच्छति शरणागतवत्सलश्च" इत्यनेनास्य गुणान् प्रख्यापयति । सोऽत्यन्तोदारसत्वो वर्ततेऽतः येनापि परितुष्यते तस्मै किञ्चिद्ददात्येव प्रभूत-दानेनैव सोऽत्यन्तसमृद्धोऽपि दरिद्रः संजातः । दरिद्रोऽसौ नाभ्यागतान् सम्यक् सत्कर्तुं प्रभवति तेन दरिद्रचमनुशोचते—'एतत्तु मां दहति यद् गृहमस्मदीयं क्षीणार्थमित्यतिथयः परिवर्जयन्ति । भृत्येष्वपि सोऽनुकम्पकः दयालुश्च तेनैव बहिः स्थानादागत्य न सुप्तान् भृत्यान् प्रबोधयति "अलं सुप्तजनं प्रबोधयितुमिति" च व्याचष्टे । न मनुष्येष्वेव करुणां विधत्तेऽसौ स्थावरेष्वप्यनुकम्पकः । न स कुसुमितां माधवीलतामप्याकृष्य कुसुमावचयं करोति कदाचिदाकृष्टतया पल्लवच्छेदो मा भूत् । तस्य पुरस्थापनोपवनविहारारामदेवालयतडागकूपयूपैरलंकृता नगर्युज्जयिनी । हारितस्यापि न्यासस्य प्रतिक्रियामतिशौण्डीरतया स्वभार्याया मातृगृहप्राप्तां चतुःसमुद्रसारभूतां रत्नावलीं समर्प्य करोति । समुपस्थितेऽपि प्राणसंकटे नानृतं भाषते भाषते च —

'भैक्ष्येणाप्यर्जयिष्यामि कर्तुं न्यासप्रतिक्रियाम् । अनृतं नाभिधास्यामि चारित्र्यभ्रंशकारणम् ॥'

परकलत्रं न कुदृष्ट्याऽवेक्षते–'न युक्तं परकलत्रदर्शनम् ।' शरणागतवत्सलश्च वदत्यार्यकम्– "अपि प्राणानहं जह्यां न तु त्वां शरणागतम् ।" रिपुमपि शकारं शरणागतं गोपायति यस्यैव कारणादसौ मृत्युवशगोऽपि जात आसीद् । धार्मिकोऽसौ देवान्नित्यं सपर्यति गृहस्थस्य च नित्योऽयं विधिरिति च विश्वसिति । तद्यथा—

तपसा मनसा वाग्भिः पूजिता बलिकर्मभिः । तुष्यन्ति शमिनां नित्यं देवताः किं विचारितैः ॥

एवमसौ विप्रवरः समुदारचेताः प्रियदर्शनोऽखण्डितचरित्रो दक्षिणश्च नायकः ।

नायिका

अस्य प्रकरणस्य वसन्तसेना नायिका । सा खल्ववन्तिपुर्याः समृद्धशालिनी गणिका । तस्या लक्ष्मीमवेक्ष्य उदाजहार विदूषकः—'किं तावद् गणिकागृहं कुबेरभवन-परिच्छेदो वा । सा तरुणी चन्द्रमुखी लावण्ययुता लज्जाशीला च वर्तते । तेनैवोक्तम्—'बालां स्त्रियं च नगरस्य विभूषणञ्च" "छादिता शरदभ्रेण चन्द्रलेखेव दृश्यते" । विटस्तां दाक्षिण्योदकवाहिनीपदेन सम्बोधयति । साऽत्यन्तोदारसत्वा अपरिचितमपि संवाहकं द्यूतकरं शरणप्रदानेनानुगृह्णाति स्वकटकप्रदानेन च ऋणात्तं निर्मोचयति । मदनिकामपि ब्रूते— यदि मम छन्दस्तदा विनार्थं सर्वं परिजनमनुनिष्यं करिष्यामि । आक्रोशन्तं रोहसेनमवलोक्य सुवर्णशकटिकाकरणार्थं स्वाङ्गेभ्य आभूषणान्युन्मुच्य प्रददाति । चारुदत्तप्रदत्तामपि रत्नावलीं पुनस्तस्य भार्यायै धूतायै समर्पयति न तस्यै ईर्ष्यति स्निह्यत्येव–कथयति च—'अह श्रीचारुदत्तस्य गुणनिर्जिता दासी तदा युष्माकमपि ।' सा कलासमन्विता विदुषी च दन्तफलके चारुदत्तस्याकृति-

लेखनेन तस्याः कला प्रकाशते । सा पुरुषोपचारचतुरा प्रगल्भा नायिका चारुदत्तेऽनुरक्ता न किञ्चिद्-ग्राम्यं नर्म भ्रंशकरमाचरति । वेश्याकुलजाप्यवेशसदृशप्रणयोपचारा वर्तते । नान्यगणिकावद्धनवन्तं पुरुषमेवाभिलषते दारिद्र्याभिभूतेऽपि चारुदत्ते दृढमनुरक्ता सा मन्यते यद्दरिद्रपुरुषसंक्रान्तमनाः गणिका लोकेऽवचनीया भवन्ति । मृत्युभये समुपस्थितेऽपि चारुदत्तं स्मरन् विमूर्च्छति । एवं स्व-गुणैः कुलजं मालिन्यमवधूय गणिकाकुले जाताऽपि कुलवधूपदमवाप्नोति ।

प्रतिनायकः

काणेलीपुत्रः राज्ञः श्यालः शकारोऽस्य प्रकरणस्य प्रतिनायकः । सोऽयं सकारस्थाने शकारमुच्चारयति तेनैव शकारनाम्नाऽभिधीयते । अयं विकत्थनशीलोऽभिमानी पापस्य क्रौर्यस्य भीरुतायाश्च मूर्तरूपः स्वात्मानं प्रवरपुरुषं वासुदेवमभिमन्यते । जडप्रकृतिः मूर्खश्चासौ सदैवानर्गलं प्रलपति । इतिहासविरुद्धीरम्यैरुपमिमीते "द्रोणपुत्रो जटायुः" "कुन्तीपुत्रो दशकन्धरः" इत्यादिभिः । सः सर्वथाऽशिक्षितोऽस्ति तथापि पण्डितमात्मानं मन्यते । क्षणे क्षणेऽनवस्थितचित्तोऽसौ पूर्वं स्वयमेव विटं प्रवहणाधिरोहणाय समादिशति पुनश्च तथा समाचरिते तस्य तं भर्त्सयति । प्रवहणस्थितां वसन्तसेनाञ्च दृष्ट्वा तां राक्षसीं मन्यमानः पूर्वं भयाद्दूरमपसरति पुनश्च व्याजेन विटं चेटञ्च दूरीकृत्य वसन्तसेनां मोटयति तस्याः हत्यापराधोऽपि चारुदत्ते नियोजयति । निर्दोषमपि चारुदत्तं प्राणदण्डेन दण्डितो यथा स्यात्तथा कुरुते । पुत्रसहितं चारुदत्तं व्यापादयितुं समादिशति । सर्वथा सर्वमसम्बद्धं जल्पति—भित्तुं करोमि—"तथा जले कर्दमं प्रक्षिपेत् यथा जलं पङ्काविलं न स्यात् ।" एवमसौ पापी हठी स्त्रैणो लम्पटश्च दानव एव वर्तते । स असम्बद्धप्रलापस्य च विग्रहवान् द्विपादा-पुच्छश्च पशुः ।

रसः

अस्य प्रकरणस्य सम्भोगशृङ्गारोऽङ्गी रसः अङ्गाश्चान्ये । वसन्तसेनाऽभिसरणे शृंगारः तस्याः मोटने, चारुदत्तस्य प्राणदण्डे, धूताविलापे करुणरसः । वसन्तसेनायाः मातुः स्थौल्यचित्रणे, शकारस्य मूर्खताप्रसंगे, राजमार्गे चन्दनकवीरकयोः पाणिना जातिसंकेतावसरे हास्यरसोऽपि सुतरां प्रफुल्लितः ।

मृच्छकटिकस्य भाषा

अस्य भाषा अभिनेयोपादेया ललितपदविन्यासयुतैः सुमधुरवर्णैरलंकृता प्रसादयुता दीर्घ-समासविरहिता च वर्तते । नात्रालंकाराणां बाहुल्यं न वा श्लेषसंश्लेषः । संवादे लघुतराणि वाक्यानि नाटकं रुचिरं कुर्वन्ति । तेनैवास्य बहूनि वाक्यानि सूक्तित्वं भजन्ते । तद्यथा--

"छिद्रेष्वनर्था बहुलीभवन्ति", "विविक्तविश्रम्भरसो हि कामः" "कामो वामः", "साहसे श्रीः प्रतिवसति ।" अस्मिन् सप्तविधाः शौरसेनी–अवन्तिजा–प्राच्या–मागधी–शकारी–चाण्डाली–ढक्कीसंज्ञाः प्राकृतभाषा प्रायेण प्रयुक्ताः ।

## मृच्छकटिकस्य वैशिष्ट्यम्

अस्य कथावस्तु लौकिकजीवितमाश्रित्य प्रवर्तते न तत्र दिव्यपात्राणां कल्पना दृश्यते । सर्वाण्यपि पात्राण्यस्माल्लोकादादायैव चित्रितानि । तेषां पात्राणां रुचिर्व्यवहारोप्यस्मत्सदृश एव । अस्य प्रबन्धस्य पर्यवेक्षणेन च तत्कालीनस्य समाजस्य राज्यस्य चावस्थाऽपि दृश्यते । तदा न सम्यक्शासनप्रबन्ध आसीत् । तदानीन्तनाः शासकाः स्त्रीलम्पटा आसन् । सर्वत्राराजकतायाः प्रसार आसीन्निशामुखेऽपि सम्भ्रान्ता अभिजाताः नार्यः राजपथे गन्तुं नाशक्नुवन् यत उक्तं ह्येतस्यां प्रदोषवेलायामिह राजमार्गे सर्वत्र विटाश्चेटाश्च राजवल्लभाश्च पुरुषाः सञ्चरन्ति, बहुदोषा हि शर्वरी । नैवाश्रितकर्मकराः प्रभुषु भक्तिमन्त आसन् । क्रुद्धा अवमानिताश्च राजपुरुषाः नृपविरुद्धं मिथः संहता बभूवुः षड्यन्त्रञ्च चक्रुः । नृपः स्वेच्छाचारी आसीत् । स्वपदपरित्राणार्थं राजा निर्दोषमपि पुरुषं कारागृहे क्षिपति स्म । अधिकरणिका अपि राजभयाद्वेपमाना न्यायं स्थापयितुं न प्राभवन् । अभिजाता अपि ब्राह्मणाः चौर्यसदृशेषु विगर्हितकर्मसु सक्ता आसन् । स्त्रीषु सतीप्रथा आसीत् । जनेषु द्यूतव्यवहार आसीत् । द्यूतस्य च राजानुमतं किञ्चित् संविधानमप्यासीत् । 'आपानकमध्य-प्रविष्टस्य' इत्यनेन वचनेन ज्ञायते तदानीं पानप्रथाऽप्यासीत् । धार्मिकदृष्ट्या तदा बौद्धमतस्य प्रचार आसीत् । बौद्धभिक्षुका लोके समादरं भजन्ते स्म । देवपूजा—बलिकर्म—शकुनविज्ञानेषु च प्रकृतीनां विश्वास आसीत् ।

एवमत्र तदानीन्तनस्य समाजस्य चित्रणं उदात्तचरित्राणि नीचचरित्राणि चोभयविधानि पात्राणि निरूपितानि । अभिनयदृष्ट्या तस्य भाषा प्रसादयुता निर्बन्धा । कथाप्रसंग सुरुचिरः प्रवाहयुतश्चेति ।



# हितं मनोहारि च दुर्लभं वचः

प्रो० श्रीरंजनसूरिदेवः

'हितं मनोहारि च दुर्लभं वचः' सूक्तिरियं भारवि-विरचिते किरातार्जुनीयकाव्ये विलसतितराम् । किरातार्जुनीयमहाकाव्यस्य प्रथमसर्गस्य चतुर्थोऽयं श्लोकः । पूर्णश्लोको हीत्थं वरीवर्त्ति—

क्रियासु युक्तैर्नृप चारचक्षुषो न वञ्चनीयाः प्रभवोऽनुजीविभिः ।
अतोऽर्हसि क्षन्तुमसाधु साधु वा हितं मनोहारि च दुर्लभं वचः ॥

ज्ञातव्यमस्ति यत् किरातार्जुनीयमहाकाव्यस्य कथायाः सन्दर्भस्तु महाभारतोपजीव्यत्वं स्वीकरोति । द्यूतपराजितो हि युधिष्ठिरः पणानुसारं द्वादशवर्षव्यापिनम् अज्ञातवासं कुर्वन्नासीत् । एकदा स खलु सरस्वतीनद्यास्तटे द्वैतवने निवसन्नासीत् । तन्मनसि दुर्योधनराज्यस्य प्रजावर्गस्य वस्तुस्थितिपरिज्ञानाय चिन्ता समुत्पन्ना । अतो हि सः तत्कार्यसम्पादनाय एकं चतुरं वनेचरं नियुक्तवान् । वनेचरो हि ब्रह्मचारिवेशं निर्माय हस्तिनापुरं गतः । कतिचिद्दिनानि तत्र तिष्ठता तेन दुर्योधनस्य प्रजानीतिविषये सांगोपांगरूपेण सूचना समाकलिता । हस्तिनापुरात् परावृत्य युधिष्ठिरसमीपे समुपस्थितः स वनेचरः, ममाप्रियकटुवचनैः युधिष्ठिरो नृपो हि कदाचित् अप्रसन्नो भवेत् इत्याशङ्क्य तत्कृते निवेदितवानयं श्लोकः । अस्यार्थस्तु इत्थमस्ति—

'हे राजन् ! क्रियासु नियोजितैः अनुजीविभिः गुप्तचरलोचनाः स्वामिनः न हि छलितव्याः । अतः साधु असाधु वा मद्वचः क्षन्तुम् अर्हसि । यतो हि श्रवणमनोहरं परिणामहितावहं च वचनं दुर्लभमस्ति ।' अस्यां सूक्तौ भारविना कविना जीवनस्य गम्भीरतया अनुभूतिः समावेशिता अस्ति । अतो हीयं सूक्तिरद्यापि लोकजीवने भूयो भूय आवृत्तिं समुपलभते ।

अनेन प्रसङ्गेन अयं निष्कर्षः समुद्भवति यत् संसारेऽस्मिन् हितं मनोहारि च वचनम् अवश्यमेव वरीवर्त्ति, किन्तु तस्य दौर्लभ्यमेव तिष्ठति । अस्मिन् सम्बन्धे भारविकविनैव किरातार्जुनीयस्य चतुर्दशे सर्गे कथानाटकस्य अर्जुनस्य मुखेन कथितमस्ति—

* सम्पादकः—'परिषद् पत्रिका', बिहार राष्ट्रभाषा परिषद्, पटना-८०० ००४ ।

विविक्तवर्णाभरणा सुखश्रुतिः प्रसादयन्ती हृदयान्यपि द्विषाम् ।
प्रवर्त्तते नाकृतपुण्यकर्मणां प्रसन्नगम्भीरपदा सरस्वती ॥

अर्थात्, सुस्पष्टैरक्षराभरणैर्मनोहरा श्रुतिसुखदा शत्रूणामपि हृदयाणां विमोहिका सहजप्रसादगुणपूर्णा गम्भीरार्थपदयुक्ता समलङ्कृता वाणी मनोरमा पत्नीव दुर्लभा विद्यते । सा खलु अतिशयपुण्यवाद्भिः सुकृतिभिरेव प्राप्यते ।

अपरञ्च, सङ्गीतकाव्यात्मकत्वं, चित्ताकर्षकत्वं बुद्धिविवर्द्धकत्वं, शुभकारकत्वं च हितमनोहरवचनस्य सर्वातिशायि वैशिष्ट्यम् । श्रुतिमधुरा हितावहा च वाक् श्रोतृहृदयेषु नृत्यन्तीव प्रविशति । एतस्मिन् सन्दर्भे कविभिर्विरचितं काव्यं साक्षात् सुदुर्लभस्य हितमनोहरवचनस्य समुज्ज्वलम् उदाहरणं प्रस्तौति । सातिशयदुर्लभत्वादेव काव्यं प्रति लोकरुचिः समधिका आग्रहशीला दरीदृश्यते । सर्वमनोरमस्य वचनस्य सुदुर्लभत्वं भारविकविनापि भूयशः समर्थितमस्ति । श्रोतव्योऽयं श्लोकः—

स्तुवन्ति गुर्वीमभिधेयसम्पदं विशुद्धिमुक्तेरपरे विपश्चितः ।
इति स्थितायां प्रतिपूरुषं रुचौ सुदुर्लभाः सर्वमनोरमा गिरः ॥

अर्थात् केचिज्जना अर्थसम्पत्तिं प्रशंसन्ते, केचित्तु शब्दच्छटां कीर्त्तयन्ति, इदमित्थं प्रतिपुरुषस्य भिन्नरुचित्वात् तादृशी वाणी सुदुर्लभा एव या सर्वेषां जनानां समानभावेन मनोरञ्जनं कुर्यात् ।

किन्तु शब्दसाधनानिष्णातविदुषां वचांसि नूनमेव हितानि मनोहराणि च भवन्ति । एताभ्यां द्वाभ्यामपि गुणाभ्यां युगपदेव समलङ्कृता वाणी वाग्व्यवहारकुशलानां जनानामेव सम्भवति ।

मानवजीवने उच्चकोटिभूता नीतिसदाचारमर्यादामण्डिता वाणी एव समादरणीया भवति । साहित्यं खलु हितमनोहरं भवति । अतएव, लोके साहित्यस्य समधिका प्रतिष्ठा प्रजायते । तस्य निरुक्तावपि हितेन सह इति सहितस्तद्भावः साहित्यमिति प्रोच्यते । साहित्यम् अथवा काव्यं हि सदाचारमूलकलोकनीतेः प्रातिनिध्यं करोति । यतश्च काव्यभाषायाः सुविचारित्वात् शान्तत्वात् अनुद्वेजितत्वात् युक्तियुक्तत्वाच्च तस्यां हितमनोहरत्वं सहजतयैव समायाति, सुदीर्घकालपर्यन्तम् अविकृतं च सा तिष्ठति । यच्चोट्टङ्कितं नीतिकारेणापि—

सुचिन्त्य चोक्तं सुविचार्य यत्कृतं सुदीर्घकालेऽपि न याति विक्रियाम् ।

कविरेव स्वीयशब्दशक्तिसाधनवशात् दुर्लभमपि हितमनोहरं वचनं सुलभं करोति । अतएव, कविभणितिः न केवलं कान्तासम्मिततयोपदेशयुजे भवति, अपितु शब्दशः कामिनीव मनोहरा, नीतिसदाचारपराया आर्यसंस्कृतेः संरक्षिकापि च भवति ।

समग्रं भारतीयं काव्यं दुर्लभस्य हितमनोहरवचनस्य अक्षयः कोषोऽस्ति। भारतीयं काव्यं श्रवणमनोहरं परिणामे च हितावहं भवति इत्यस्मिन्सन्दर्भे एका कथा श्रूयते—

भारवि-विरचितां 'सहसा विदधीत न क्रियामविवेकः परमापदां पदम्' इति श्रवणमनोहरां हितावहाञ्च काव्यपङ्क्तिं दृष्ट्वा एकः श्रेष्ठी अनर्थकारिकार्यात् विरतोऽभूत्। वाणिज्यकार्यं निष्पाद्य पञ्चदशवर्षानन्तरं प्रवासाद् गृहमागतः स श्रेष्ठी स्वपत्न्याः पार्श्वे सुप्तं सुन्दरं युवानं विलोक्य रोषारुणोऽभवत्, पुनश्च वधाय समुद्यतो जातः। तस्मिन्नेव क्षणे तस्य श्रेष्ठिनो दृष्टिः नागदन्तकेऽवलम्बितायां पट्टस्योपरि लिखितायां तत्काव्यपङ्क्तौ निपतिता, अतएव सः सहसा वधकार्याद् विमुखो बभूव। अन्ततोगत्वा, वस्तुस्थितिः स्पष्टा अभवत्। प्रवासगमनकाले तस्य पत्नी अन्तर्वत्नी आसीत्। स च खलु युवा तस्यैव पञ्चदशवर्षीयः पुत्र आसीत्।

अनेन कथासन्दर्भेण स्पष्टमिदं यत् हितं मनोहारि च वचनं यद्यपि दुर्लभमस्ति, तथापि कविर्मनीषिप्रसादात् तत् सुलभायते इति किम्बहुना।



# कालिदासीयरूपकेषु प्रकृतिः

प्रो० राजदेवमिश्रः

अलङ्कारशास्त्राचार्यमूर्धन्यभूतेन ध्वनिसम्प्रदायप्रवर्तकेनाचार्यानन्दवर्धनेनोक्तम्—

वस्तु च कस्यचिद् रसस्य भावस्य वाङ्गत्वं प्रतिपद्यतेऽन्ततो विभावत्वेन।

अस्यायमेवाभिप्रायोऽस्ति यत् संसारस्य चराचरात्मकमखिलं वस्तुजातं काव्यगतस्य कस्यचिद् भावस्य विभावस्य वाऽङ्गत्वमधिगन्तुं शक्नोति। कविताकामिनीकान्तः महाकविकालिदासस्तथ्यमिदं सम्यक्तया विज्ञायैव स्वीयकाव्यविरचनायां प्रवृत्तः इति तत्कवित्वपर्यालोचनेन सिद्ध्यति। परिणामतः सहृदयाह्लादतत्परेषु तदीयकाव्येष्वेकतो जडपदार्थानां मनोमुग्धकारि चित्रणं पुनरपरतश्चेतनप्राणिनां हृदयावर्जकं भावभरितं वर्णनमपि सहृदयजनचेतांसि सुतरां समाह्लादयति। स न केवलं मानवहृदयहृद्यभावविज्ञानविचक्षणोऽपितु पशुपक्षिणामन्तस्तलोद्भूतभव्यभावानां चारुचित्रकारः। सौन्दर्यान्वेषणतत्परा तद्दृष्टिः प्राकृतिकदृश्येष्वपि स्वभावतः समापतिता दृश्यते। वस्तुतो मानवस्य प्रकृतेश्च वास्तविकस्वरूपदर्शने तदीया सूक्ष्मेक्षिका सुतरां क्षमेति सर्वैः काव्यतत्त्वमर्मज्ञैः समालोचकैर्नूनं स्वीक्रियते। मानवीयमानसविविधवृत्तीनां यथाऽनुपमरीत्या सूक्ष्मातिसूक्ष्मं दर्शनं विधाय तेन सर्वातिशायि वर्णनकलाकौशलेन तासां मार्मिकमभिव्यञ्जनं विहितं तत्तु न केवलं संस्कृतसाहित्येऽपितु विश्वसाहित्येऽप्यनौपम्यं भजते। एवमेव विधिविरचितसुविशालसृष्टौ चितुदक्षु विराजमानायाः प्रकृतिरमण्या अपि अतिगहनं वैज्ञानिकं च पर्यवेक्षणं कृत्वा तत्कृतप्रकृतिगतविविधरहस्योद्घाटनमपि संस्कृतसाहित्यामूल्यनिधित्वेन सकलान् काव्यरसास्वादनतत्परान् सरसहृदयान् काव्यानन्दमयरससागरे नितरां निमज्जयति।

कालिदासीयप्रकृतिवर्णने यादृशी सजीवता, भव्यता, रमणीयता तथा गतिशीलता दृष्टिगोचरी भवति सा त्वन्यत्र नितान्तं दुर्लभा। तस्य सर्वव्यापिनी सूक्ष्मतमा च दृष्टिर्वनेषु, उपवनेषु, पर्वतेषु, सरितासु, स्रोतस्सु, सागरेषु, पादपेषु, पुष्पेषु, लतासु, नक्षत्रेषु, चन्द्रे, सूर्ये, आकाशे, पशुपक्षिषु, ऋतुषु, चेत्यादिप्रकृत्यङ्गेषु सर्वथा समासक्ता। रघुवंशकुमारसम्भवमेघदूततुसंहारा-

* संस्कृतविभागाध्यक्षः—का० सु० साकेत स्नातकोत्तर म० वि० फैजाबाद।

भिधेयेषु महाकाव्यखण्डकाव्येषु यदा तेन चारुतराणि प्रकृतिचित्राणि चित्रितानि तथैव अभिज्ञान-शाकुन्तलमालविकाग्निमित्रविक्रमोर्वशीयनामकेषु रूपकेष्वपि प्रकृतिसुन्दरी विविधवर्णनेन चित्रिता येन सा हठादेव सचेतसां मनोमिलिन्दं समाकर्षति। अस्मिन् प्रबन्धे सम्प्रति कालिदासीयरूपकेषु चित्रितानि कानिचित् प्रकृतिगतचित्राणि समुद्घाट्यन्ते।

अभिज्ञानशाकुन्तलनामकं कालिदासीयनाटकं न केवलं स्वदेशीयानेव काव्यरसास्वादपरान् सहृदयानपितु विदेशीयानपि काव्यसौन्दर्यबलेन विमोहति। नाटकललामभूतस्य सकलसरसलोक-वन्दनीयस्य तस्य ( शाकुन्तलस्य ) प्रारम्भिके मङ्गलाचरण आत्मनः स्वाभीष्टदेवाधिदेवस्य भगवतो भूतनाथस्य दिव्याष्टमूर्तीनां प्रकृतावेव साक्षात्कारं कृत्वा महाकविर्जगन्मङ्गलं कामयते—

या सृष्टिः स्रष्टुराद्या वहति विधिहुतं या हविर्या च होत्री
ये द्वे कालं विधत्तः श्रुतिविषयगुणा या स्थिता व्याप्य विश्वम्।
यामाहुः सर्वबीजप्रकृतिरिति यया प्राणिनः प्राणवन्तः
प्रत्यक्षाभिः प्रपन्नस्तनुभिरवतु वस्ताभिरष्टाभिरीशः॥

शाकु० १।१॥

उपर्युक्तश्लोकानुसारं स ( कालिदासः ) जले, पावके, यजमाने, निशाकरे, दिवाकरे, आकाशे, क्षितौ, पवने चेत्यादिप्रकृतिरूपेष्वेव स्वीयमाराध्यदेवमीशं साक्षात्करोति। प्रकृतेर्विशालतां दिव्यताञ्च प्रति कविहृदये कीदृशः श्रद्धामयो भावो विद्यते पद्येनानेन सहजत एव विज्ञातुं शक्यते।

शाकुन्तलस्य प्रथमेऽङ्के सशरचापहस्तो राजा दुष्यन्तः सूतेन सार्धं रथारूढो मृगमनुसरति। रथं विलोक्य भयभीतो मृगो बारम्बारं रथं पश्यन् धावति। धावतस्तस्य मनोग्राहि चित्रणं अधस्तने श्लोके जातम् :—

ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने बद्धदृष्टिः
पश्चार्धेन प्रविष्टः शरपतनभयाद् भूयसा पूर्वकायम्।
दर्भैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा
पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति॥

शा० १।७॥

राजा दुष्यन्तः सूतं वदति–यदयं मृग इदानीमपि पश्चादागच्छति स्यन्दने ग्रीवाभङ्गपूर्वकं यद् रथं पौनःपुन्येन पश्यति तत्तु नितरां मनोहारि। स्वशरीरे शरपतनशङ्कया शरीरस्य उत्तरार्द्धभागेन तत्पूर्वभागं प्रविष्टः। धावनपरिश्रमेण समुद्घाटिताद् मुखादर्धचर्विताः कुशाः पतिताः यैः समस्तोऽयं मार्गः परिव्याप्तः। अस्योन्नतप्लवनादित्थं प्रतिभाति यदयं खल्वाकाशेऽधिकं भूमौ तु न्यूनमेव व्रजति। श्लोकेऽस्मिन् स्वभावोक्त्यलंकारसाहाय्येन कविना कृतं मृगधावन-सम्बन्धिस्वाभाविकवर्णनमतीव चारुतरम्।

महाकविकालिदासेन षण्णाम् ऋतूनां सर्वाङ्गीणं वर्णनं ऋतुसंहाराभिधेयखण्डकाव्ये कृतम्। यद्यपि स समस्तर्तूनां चित्ताकर्षके चित्रणे नितान्तं प्रवीणः परन्तु ग्रीष्मवसन्तयोः चित्रणं प्रति तस्य विशेषानुरागः प्रतिभाति। ऋतुराजवसन्तचित्रणेन सः यादृशीं प्राकृतिकीं सुषमां सृजति सा तु नितान्तं स्पृहणीया तथा हृद्या वर्तते। नाट्यग्रन्थेष्वपि ऋतुराजं प्रति कवेरगाधानुरागः पदे-पदे लक्ष्यतेतराम्। मालविकाग्निमित्रस्य तृतीयाङ्के राजाऽग्निमित्रो विदूषकं प्रति वसन्तागमनस्य चर्चां कुर्वन् कथयति—

रक्ताशोकरुचा विशेषितगुणो बिम्बाधरालक्तकः
प्रत्याख्यातविशेषकं कुरबकं श्यामावदातारुणम्।
आक्रान्ता तिलकक्रिया च तिलकैर्लग्नद्विरेफाञ्जनैः
सावज्ञेव मुखप्रसाधनविधौ श्रीर्माधवी योषिताम्॥ माल० ३।५॥

लोहितवर्णस्याशोकस्य प्रभया बिम्बाफलसदृशाधर–रञ्जनसाधनरसः तिरस्कृतः। कृष्णश्वेतलोहितवर्णेन कुरबकेन कपोलादौ स्थितं चित्रकं (नानावर्णरचनाविशेषरूपम्) अधःकृतम्। संसक्तभ्रमरकज्जलैस्तिलकैः रमणीनां ललाटिकालङ्कारशोभाऽऽक्रान्ता। इत्थं प्रतिभाति यत् वसन्तशोभा रमणीनां मुखालङ्करणं प्रति तिरस्कारयुक्तेव विद्यते। श्लोकस्यास्याभिप्रायो विद्यते यद् वसन्तशोभासमक्षं रमणीनां मुखशोभा हतप्रभा। श्लोकेऽस्मिन् सुतरामाह्लादकारि वसन्तशोभावर्णनं नूनं महत्त्वमावहति।

विक्रमोर्वशीयस्य द्वितीयाङ्के राजा विदूषकं प्रति वासन्तिकच्छटां वर्णयति—

अग्रे स्त्रीनखपाटलं कुरबकं श्यामं द्वयोर्भागयोः
रक्ताशोकमुपोढरागसुभगं भेदोन्मुखं तिष्ठति।
ईषद्बद्धरजःकणाग्रकपिशा चूते नवा मञ्जरी
मुग्धत्वस्य च यौवनस्य च सखे मध्ये मधुश्रीः स्थिता॥ विक्रमो० २।७॥

अग्रे वनितानखमिव श्वेतरक्तं कुरबकं विभाति। कृष्णरक्तवर्णमिश्रिताशोकपुष्पं विकसनोत्सुकं वर्तते। आम्रवृक्षे च किञ्चिद् विद्यमानरजःकणादग्रभागे कृष्णपीता च नूतना मञ्जरी दृष्टिगोचरी भवति। मित्र! इत्थं प्रतिभाति यद् वसन्तशोभा बालत्वस्य तारुण्यस्य च मध्ये स्थिता विद्यते। पद्येऽस्मिन् प्रथमद्वितीयचरणयोः वासन्तीशोभायाः बाल्यावस्था तृतीयचरणे च यौवनावस्था प्रकाशं नीता स्वचारुचित्रेणाधिकमानन्दयति।

अभिज्ञानशाकुन्तलस्य प्रथमेऽङ्के ग्रीष्मर्तोर्नितान्तं नैसर्गिकचित्रणमभूत्। सूत्रधारो ग्रैष्मं वर्णयन् कथयति—

सुभगसलिलावगाहाः पाटलसंसर्गिसुरभिवनवाताः।
प्रच्छायसुलभनिद्रा दिवसाः परिणामरमणीयाः॥ शा० १।३॥

ग्रीष्मकालिकदिवसेषु सलिले स्नानमतीव प्रीतिकरं भवति। स्थलपद्मानां सम्पर्काद् वनवाताः सौरभमया वनच्छायायुक्तस्थलेषु निद्रा सुखेन लभ्या भवति। निदाघदिवसा वासरावसानेऽत्यन्तं रमणीया भवन्ति। विशेषाणां साभिप्रायत्वात् परिकरालंकारस्य, यथावद्वस्तुवर्णनाच्च स्वभावोक्त्यलंकारस्य संयोजनात् ग्रीष्मर्तोः सहजं मनोहारि च चित्रं नयनगोचरगतमिव परिलक्ष्यते।

महाकविकालिदासो भूतलगतप्रकृतिचित्रणं विधातुं यथा नैपुण्यं भजते तथैवाकाशगतं दृश्यमपि चारुतरं चित्रयति। तत्कृतिषु सूर्योदयस्य, सूर्यास्तस्य, प्रभातस्य, सन्ध्यायाः मध्याह्नस्य च विहितं वर्णनं तत्तद्बिम्बग्रहणं सम्यक्तया कारयितुं समर्थम्। मालविकाग्निमित्रस्य द्वितीयेऽङ्के मध्याह्नस्य हृदयग्राहिचित्रणं पाठकानां सरसचित्तचञ्चरीकं नितान्तं चमत्करोति। वैतालिको राजानं प्रति मध्याह्नमित्थं वर्णयति—

पत्रच्छायासु हंसा मुकुलितनयना दीर्घिका पद्मिनीनां
सौधान्यत्यर्थतापाद्वलभिपरिचयद्वेषपारावतानि।
बिन्दुक्षेपान्पिपासुः परिसरसि शिखी भ्रान्तिमद्वारियन्त्रं
सर्वैरुस्त्रैः समग्रैस्त्वमिव नृपगुणैर्दीप्यते सप्तसप्तिः॥

माल० २।१२॥

मध्याह्नकालेऽत्यधिकतापाद् हंसा उद्यानवापीकमलिनी-पत्राणां छायासु मुद्रितचक्षुषो निलीयन्ते। कपोताः सदनानां वलभीदेशं न व्रजन्ति। ते क्वचिदन्यत्र प्रच्छायशीतलं स्थानं भजन्ते। तृषार्ताः मयूराः घूर्णमानस्य सलिलयन्त्रस्य समीपमुपसर्पन्ति। पुरोदृश्यमानः सूर्यः समस्तैर्मयूखैस्तथैव विराजते यथा त्वं सकलराजगुणैर्विराजमानस्तिष्ठसि। उपर्युक्तश्लोकचित्रिता मध्याह्नप्रचण्डता कं न विचालयति।

एवमेव विक्रमोर्वशीयस्य द्वितीयाङ्कस्यावस्तने श्लोकेऽपि मध्याह्नस्य मनोहारि वर्णनमभूत् येन तस्य नैसर्गिकं रूपं नेत्रसमक्षं नृत्यतितराम् —

"उष्णार्तः शिशिरे निषीदति तरोर्मूलालवाले शिखी
निर्भिद्योपरि कर्णिकारमुकुलान्याशेरते षट्पदाः।
तप्तं वारि विहाय तीरनलिनीं कारण्डवः सेवते
क्रीडावेश्मनि चैष पञ्जरशुकः क्लान्तो जलं याचते॥ विक्र० २।२२॥

जगन्नयनानन्दकरं निशाकरं प्रति कालिदासस्य सहजः प्रगाढश्चानुरागः प्रतीयते। तेन चन्द्रमसो विविधानि मनोमोदकराणि चित्राणि स्वकाव्येषु चित्रितानि राजन्ते। विक्रमोर्वशीयस्य तृतीयाङ्के रजनीकरं वन्दमानो राजा बद्धपाणिर्वदति—

रविमाविशते सतां क्रियायै, सुधया तर्पयते पितृन्सुरांश्च।
तमसां निशि मूर्च्छतां निहन्त्रे, हरचूडानिहितात्मने नमस्ते॥ विक्र० ३।७॥

हे चन्द्र! भवान् सज्जनानां कर्मसिद्ध्यर्थं सूर्यतेजसि गूढो भवति। पुनश्च पितृन् देवांश्चामृतेन प्रीणयति। निशायामन्धकारस्तोमं नाशयति। अपि च हरिशिरसि स्थापितैककलः सन् तिष्ठति। एतादृशे ( सर्वगुणसम्पन्नाय ) भवते नमः।

महाकविकालिदासो भारतीयसंस्कृतेः समुपासकोऽस्ति। भारतीयसंस्कृतेर्वास्तविको विकासस्तपोवनादेव जात इति तस्य द्रढीयान् विश्वासः। अतस्तपोवनानि प्रति तस्याकर्षणं स्वाभाविकमेव। त्यागतपस्यारूपोदात्तगुणमण्डितभारतीयसंस्कृतिजनकानि परमपूतानि तपोवनानि तेनातिसान्निध्यतो विलोकितानीति प्रतीयते। एतदेव कारणमस्ति यत् तद्द्वारा वर्णितं तपोवनं सजीवतया सहृदयपाठकानां नेत्रगोचरतामधिगत्य तेषां मानसकालुष्यं प्रक्षालयतीव राजते। अभिज्ञानशाकुन्तलस्य प्रथमेऽङ्के कस्यचिन्निर्देशमन्तरा तद्दर्शनमात्रेण 'कण्वाश्रमोऽयमिति' विज्ञाय राजा दुष्यन्तस्तस्य ( आश्रमस्य ) सजीवमाह्लादजनकञ्च चित्रमुपस्थापयति—

नीवाराः शुकगर्भकोटरमुखभ्रष्टास्तरूणामधः
प्रस्निग्धाः क्वचिदिङ्गुदीफलभिदः सूच्यन्त एवोपलाः।
विश्वासोपगमादभिन्नगतयः शब्दं सहन्ते मृगा-
स्तोयाधारपथाश्च वल्कलशिखा निष्यन्दरेखाङ्किताः॥ शा० १।१४॥

कस्मिंश्चित्प्रदेशे वृक्षाणां तले कोटरमध्यवर्तिभिः शुकैः पातिता मुनिधान्यकणा दृश्यन्ते। कुत्रचित् तापसतरुफलभेदकाः प्रस्निग्धाः पाषाणा लक्ष्यन्ते। क्वचित् विश्वाससम्प्राप्त्याऽविकृतसञ्चारा हरिणा रथध्वनिं सुखेन शृण्वन्ति। जलाशयानां पन्थानो वल्कलाग्रनिष्यन्दजलधारारेखाभिश्चिह्निता दृश्यन्ते। उक्तं तपोवनसम्बन्धिवर्णनं कस्य चेतो नाह्लादयति?

महाकविकालिदासेन स्वकाव्येषु यत्र-तत्र प्रस्तुतमानवीयामूर्तवैशिष्ट्यस्य सौन्दर्यस्य वोत्कर्षं प्रतिपादयितुं प्रकृतिगताप्रस्तुतप्रसङ्गेभ्यः साहाय्यं गृहीतम्। प्रकृतिप्रस्तुतविधानैस्तेन यत्र मानवीयं सौन्दर्य्यम् अमूर्तं वैशिष्ट्यं वोद्दीपयितुं प्रयतितं तत्रावश्यमेव साफल्यमधिगतम्। कालिदासो वस्तुतः प्रकृतेः कोमलरूपस्य चित्रकारः। तस्येयं मान्यता प्रतीयते यत् प्रकृतावेव यथार्थं सौन्दर्यं निहितं वर्तते। यतो हि प्रकृतिगतमखिलं सौन्दर्यं नैसर्गिकतामेवाश्रयते। मानवीयसौन्दर्यस्य तीव्रतां यथार्थताञ्चाभिव्यञ्जयितुं तेन प्रकृतिः समाश्रीयते।

अभिज्ञानशाकुन्तलस्य प्रथमेऽङ्के दुष्यन्तो मुनिकन्यकानां नैसर्गिकं रूपलावण्यं विलोक्य सहसा वदति—

अहो मधुरमासां दर्शनम्।
शुद्धान्तदुर्लभमिदं वपुराश्रमवासिनो यदि जनस्य।
दूरीकृताः खलु गुणैरुद्यानलता वनलताभिः॥ शा० १।१७॥

अन्तःपुरेषु दुष्प्राप्यमेतादृशं कमनीयं शरीरं यदि तपोवनवासिनः कन्यालोकस्यास्ति तर्हि नूनमेवोद्यानलता वनलताभिः सौन्दर्यकोमलत्वादिगुणैस्तिरस्कृताः। अत्र पूर्वार्धगतवनकन्यकानामपूर्वं लावण्यं प्रस्तुतं वर्तते तस्योत्कर्षायोत्तरार्धे प्रकृति-प्रसङ्गोऽङ्गीकृतस्तेन वनकन्यकानां स्वाभाविक-सौन्दर्यस्योत्कर्षः प्रतीयते।

तस्यैव नाटकस्य प्रथमेऽङ्के कण्वदुहितुः शकुन्तलाया नैसर्गिकं सौन्दर्यं कविरधोरीत्या वर्णयति—

सरसिजमनुविद्धं शैवलेनापि रम्यं
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति।
इयमधिकमनोज्ञा वल्कलेनापि तन्वी
किमिव हि मधुराणां मण्डनं नाकृतीनाम्॥ शा० १।२०॥

शैवलेनापि समावृतं कमलं मनोहरं भवति। मलिनोऽपि कलङ्कश्चन्द्रस्य कान्तिं वर्धयति एषा पुरोदृश्यमाना कृशाङ्गी शकुन्तला वल्कलवस्त्रैरप्यधिकं मनोहारिणी वर्तते। यतो हि मनोज्ञानामाकृतीनां सर्वमेव वस्तु शोभां वर्धयति।

प्रकृतौ चैतन्यस्य मानवीयवृत्तेश्चारोपः कालिदासीयप्रकृतिवर्णनस्य महद्वैशिष्ट्यम्। प्रकृतिं प्रति मानवीयानुरागचित्रणसंलग्नः स मानवं प्रति प्रकृतेरनुरागं चित्रयितुं समुद्यतो जायते। दार्शनिकदृष्ट्या स्याद्वा प्रकृतिर्जडाऽऽत्मतत्त्वविहीना परन्तु कालिदासीया सूक्ष्मदृष्टिः प्रकृतौ दिव्यं चैतन्यं साक्षात्कुरुते। तेन प्रकृतिगता सहानुभूतिः सुख-दुःखस्थितिकालोद्भूता समवेदना च स्वयमेवानुभूते। अतएव तदङ्गीकृता प्रकृतिर्भावनाशीलाऽस्ति तथा मानवलोकं प्रति तस्या हृदये पूर्णा सहानुभूतिः।

अभिज्ञानशाकुन्तले कालिदासीया शकुन्तला प्रकृतिभावनाभिभूता। सकला प्रकृतिः शकुन्तला च परस्परमित्थं सम्पृक्तेऽपि चोभयोः पारस्परिकसौहार्दभाव इयतीं पराकाष्ठां गतो विद्यते यत् पतिगृहं प्रति शकुन्तलाप्रस्थानकाले तपोवनतरुभ्यस्तदर्थमादेशग्रहणमावश्यकं मत्वा महर्षिकण्वस्ताननुज्ञां याचते--

पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु या,
नादत्ते प्रियमण्डनाऽपि भवतां स्नेहेन या पल्लवम्।
आद्ये वः कुसुमप्रसूतिसमये यस्या भवत्युत्सवः,
सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम्॥ शा० ४।९॥

हे तपोवनतरवः! युष्मास्वपीतेषु या शकुन्तला स्वयं जलं पातुं न यतते स्म। भवतां स्नेहेन या शकुन्तला (अलङ्करणप्रिया) सत्यपि युष्माकं किसलयं न गृह्णाति स्म। युष्माकं प्रथमे पुष्पोद्गमसमये यस्याः (शकुन्तलायाः) आनन्दातिरेको भवति स्म। सैव शकुन्तला

पतिगृहं व्रजति अतः सर्वैरपि भवद्भिर्गमनायानुज्ञा दीयताम्। मानवप्रकृत्योः परस्परानुरागस्य कीदृश्यानन्ददायिनी व्यञ्जना जाता पद्येऽस्मिन् सा तु वर्णयितुं न पार्यते। कस्मिंश्चिदपि वने वनवृक्षादीन् विलोक्य नूनमेव स्मृतिपथं गत्वाऽयं प्रसंगोऽपूर्वम् भावसञ्चारं विधास्यति सहृदयजन-चेतःस्वित्यत्र न कोऽपि सन्देहः।

संसारेऽस्मिन् कन्याविवाहावसरे मित्रबन्धुसम्बन्ध्यादिभिर्यथा मंगलावसरानुकूलं यथा-शक्त्युपह्रियते तथैव श्वसुरालयं प्रति तस्याः ( शकुन्तलायाः ) प्रस्थानसमाचारं विज्ञाय वनवासि-तरुभिस्तस्याः कृते विविधा उपहाराः प्रदीयन्ते केन ( वृक्षेण ) शकुन्तलार्थं किं वस्तु प्रदत्तमिति प्रतिपादयन् कण्वशिष्यो गौतमीं वदति--

क्षौमं केनचिदिन्दुपाण्डु तरुणा माङ्गल्यमाविष्कृतं
निष्ठ्यूतश्चरणोपरागसुभगो लाक्षारसः केनचित्।
अन्येभ्यो वनदेवताकरतलैरापर्वभागोत्थितै-
र्दत्तान्याभरणानि नः किसलयोद्भेदप्रतिद्वन्द्विभिः॥ शा० ४।५॥

अस्मभ्यं केनचित् तरुणा चन्द्रशुभ्रं दुकूलं प्रदत्तम्। केनापि वृक्षेण चरणरञ्जनयोग्यो लाक्षारस आविष्कृतः। अन्यैर्वृक्षैर्मणिबन्धं यावन्निर्गतैर्नवकिसलयसन्निभैर्वनदेवताकरतलैराभूषणानि वितीर्णानि। प्रकृतेर्मानवस्य च पारस्परिकं सहयोगं समाश्रित्य विकसितैषा तपोवनसभ्यता कस्य कृते न स्पृहणीया।

कन्याप्रस्थानकाले पतिगृहं प्रति सकलोऽयं मानवलोकः सहजत एव विकलितचित्तः सन् कारुण्यं प्रतिपद्यते। 'यास्यत्यद्य शकुन्तलेति हृदयमि'त्यादिना विलपतो वीतरागिणः सांसारिक-मायाजालविरतस्य महर्षिकण्वस्य हृदयं चेद् विदीर्णं जातं तर्हि का कथाऽन्यप्राणिनाम्? शकुन्तला-वियोगविधुरः प्रियंवदानसूयादिसखीवर्ग एकतो विलपत्यपरतोऽखिला तपोवनप्रकृतिस्तद्वियोग-व्यथिता सती भोजननर्तनादिव्यापारजातं विहायानुपमव्यथाप्रकाशकान्यश्रूणि प्रवाहयति। उक्तमेव तथ्यं प्रकाशयन्ती प्रियंवदा शकुन्तलां वदति--

न केवलं तपोवनविरहकातरा सख्येव।

त्वयोपस्थितवियोगस्य तपोवनस्यापि तावत् समवस्था दृश्यते—

उद्गलितदर्भकवला मृग्यः परित्यक्तनर्तना मयूराः।
अपसृतपाण्डुपत्रा मुञ्चन्त्यश्रूणीव लताः॥ शा० ४।१२॥

प्रकृतिसुन्दरीमधुरवात्सल्यमये क्रोडे लालिता पालिता च निसर्गकन्या शकुन्तला प्रकृत्या सार्धमीदृशं सान्निध्यमवाप्ता यद् स्वप्रस्थानकाले सा लताभगिनीं वनज्योत्स्नां न विस्मरति। तात! लताभगिनीं वनज्योत्स्नां तावदामन्त्रयिष्ये इत्यादिना ताम्प्रति स्वीयां ममतां प्रकटयति। पितुरादेशमवाप्य सा ताम् ( वनज्योत्स्नाम् ) उपेत्य समालिङ्ग्य च कथयति--

लता भगिनि ! प्रत्यालिङ्ग मां शाखामयैर्बाहुभिः ! अद्यप्रभृति दूरवर्तिनी खलु ते भविष्यामि, तात ! अहमिव इयं चिन्तनीया ।

शकुन्तलया वात्सल्यभावेन पालितः पुत्रकृतको दीर्घापाङ्गनामा मृगस्तु वियोगव्यथाव्यथितः सन् तस्याः प्रस्थानकाले सहसा समागत्य तत्परिधानसंलग्नो भवति । तस्मिन् अवसरे विप्रयोगविह्वलो महर्षिकण्वो वदति--

यस्य त्वया व्रणविरोपणमिङ्गुदीनां
तैलं न्यषिच्यत मुखे कुशसूचिविद्धे ।
श्यामाकपुष्टिपरिवर्धितको जहाति
सोऽयं न पुत्रकृतकः पदवीं मृगस्ते ॥ शा० ४।१४॥

समवलोक्य वियोगविधुरं मृगशावकं कथञ्चिद् धैर्यमवलम्ब्य शकुन्तला तं समाश्वासयति—

वत्स ! किं सहवासपरित्यागिनीं मामनुसरसि । अचिरप्रसूतया जनन्या विना वर्धित एव । इदानीमपि मया विरहितं त्वां तातश्चिन्तयिष्यति निवर्तस्व तावत् । शा० च० ॥

इत्थं विलोक्यते यद् शाकुन्तले प्रकृतिर्मानवसहचरी भूत्वा तेन सार्धमेव सुखदुःखे अनुभवति । सा ( प्रकृतिः ) मानवसुखेन सुखिता सती विहसति तद्दुःखेन च भृशं दुःखिता सती करुणक्रन्दनं विदधाति । वस्तुतः कालिदासचित्रिता प्रकृतिः शाकुन्तलस्य मुख्यपात्रत्वमुपगता वर्तते । सा केवलं सजीवतामेव नापद्यतेऽपितु साऽन्यपात्राणीवाश्रमस्य जीवने सक्रियं भागं गृह्णाति । नाटकस्यास्य प्रकृतिर्मानवीयानुभूतिसंवलिता सती स्वात्मन्येकमलौकिकमाकर्षणमाधत्ते येन कस्यचिदपि काव्यमर्मज्ञस्य मनोमिलिन्दस्तद्गुणसौरभम्प्रति सुतरां समाकृष्टो भवति । मानवेन सह प्रकृतेरयमनुपमयोगः कालिदासीयकाव्यैः साकमपि मानवीयहृदययोगं विधातुं सर्वथा क्षमः ।

उपरि समासतः कालिदासरूपकेषु चित्रितायाः प्रकृतिरमण्याः कानिचिल्लावण्यमण्डितानि चित्राणि समुद्घाटितानि यैस्तानि ( रूपकाणि ) न केवलं भारतीयान् अपितु विदेशीयानपि सहृदयलोकान् रसास्वादविह्वलान् विधातुं सर्वथा सामर्थ्यं यान्ति । नूनमेव प्रकृतिच्छटाच्छुरितानि कालिदासीयरूपकाणि युगयुगान्तरं यावद् सरसजनान् काव्यरसाम्बुधौ निमज्जितान् करिष्यन्तीत्यत्र न काचिद् विप्रतिपत्तिः ।



# छिन्ने मूले नैव पत्रं न शाखा

अभिराजो डॉ॰ राजेन्द्रमिश्रः

बहुप्रचलितेयं सदुक्तिरद्य मानसम्मे पीडयति सन्दर्भविशेषे। प्रायेण हिन्दीभाषायाः पण्डितम्मन्याः पल्लवग्राहिज्ञानदुर्विदग्धा आधुनिका विद्वांसः संस्कृतज्ञेभ्योऽसूयन्ति। हिन्दी हिन्द्यस्ति संस्कृतं संस्कृतम्। हिन्दी जीवतितरामद्य संस्कृतन्तु मृतम्। हिन्दीभाषापठनपाठने संस्कृतस्य काऽपेक्षेत्येवमादिभिर्हृदयान्धकारप्रसूतैः कुतर्कैर्वितण्डां पल्लवयन्तस्ते प्रायेण कस्मिंश्चित् मत्स्यापणशृङ्गाटके 'काफीहाउस' नाम्नि दुर्वादमन्दिरे लालाटिकसम्मर्दे वा दृश्यन्ते। नमोवाकं प्रशास्महे तेभ्योऽभिनववृहस्पतिभ्यः।

परन्तु विचारणीयोऽयं विषयः संस्कृतमनादृत्य किं काऽपि भारतीया भाषा जीवितुं श्वसितुं वा शक्नोति? देववाणीशब्दभाण्डागारन्यासं प्रत्यर्प्य किमवशिष्टं भवति भाषास्वन्यासु? तत्रापि पुनः राष्ट्रभाषा हिन्दी तु साक्षादेव संस्कृतपिण्डजाता। यथा खलु कन्यकायाः शरीररचना मातुरेव मांसमज्जारक्तादिकैर्भवति, प्राणसञ्चारोऽपि तस्याः मातुरेव प्राणवत्तया जायते सर्वथा तथैव हिन्द्यपि संस्कृतजाता, संस्कृतनिर्मिता संस्कृतानुप्राणिता। तर्ह्यलमतिमात्रं सन्तप्य। अलं वा हिन्दीप्राणसञ्जीवनीं वृन्दारकगवीं खलीकृत्य!

यदेव संस्कृतज्ञानां तृणकल्पं सामान्यं ज्ञानं तदेव हिन्दीभाषाविपश्चित्तल्लजानामप्रतिमं पाण्डित्यमिति मे मतिः। शब्दव्युत्पत्तिजन्यं व्याकरणपाटवं पाणिनिमन्तरेण क्व कथं वोपलभ्यते? शब्दानां युगयात्रा, रूपपरिवर्तनं ध्वनिपरिवर्तनञ्च तेषां—कथङ्कारमभूदिति सर्वं सुष्ठु विज्ञायैव भाषावैदुषी स्वायत्तीकर्तुं शक्यते। किन्तु नैतत्सम्भाव्यतेऽमर्षमलीमसां धियं समाधाय। ईर्ष्याद्वेषाभ्यां किं भविष्यति? तर्कप्रदानैस्तिन्तिडीवृक्षो द्राक्षाफलानि न प्रसूते। असितोपनेत्रधारणव्याजेन दिनं वा शर्वरीभवितुं न शक्नोति।

पुनर्विवक्षुरहम्। प्राक्तनयुगादिदानीं यावत्प्रायेण, दुर्धर्षसंस्कृतज्ञानमण्डितैः पण्डितैरेव हिन्दी-भाषा संवर्धिता पालिता पोषिता च। सर्वेऽपि प्रत्नतूनहिन्दीमहाकवयो निबन्धकाराः कथाकारा इतरेतरे वा विविधकाव्यपल्लवयितारः प्रायेण सुष्ठु संस्कृतज्ञा आसन्। यतो हि संस्कृतं प्रकृतिः प्राकृतं च हिन्दी! प्रकृतिमविज्ञाय प्राकृतज्ञानं कथन्नु भवितुं शक्नोति।

संस्कृतोपजीवी मूलतोऽस्मि। परन्तु बाल्यकालादेव कवयामि हिन्दीभाषायाम्। बहूनि काव्यानि प्रकाशितानि वर्तन्ते। हाईस्कूलपरीक्षार्थिनश्छात्रा मदुपज्ञं मुक्तिदूताभिवं खण्डकाव्यं

* संस्कृत-प्रवक्ता, प्रयाग विश्वविद्यालयः, प्रयागः।

पाञ्युहाकङ्गेण परिशीलयन्ति । किमेतावताऽपि हिन्दीसाहित्यकारेषु गणयितुं न शक्ये ? किं स एव हिंदीवान् हिंदीपक्षधरो हिंदीभाषामर्मज्ञो वा यो हि हिंदीविषयमधिकृत्य एम० ए०परीक्षामुत्तरति यद्वा कस्मिंश्चिद् विद्याधिष्ठाने हिंदीं पाठयति ? सर्वथा नेदम् । स्वाध्यायादेव सर्वं सिध्यति । स्वाध्याय-बलेनैव श्रीजयशङ्करप्रसादो हिन्दी-परीक्षां कामप्यनुत्तीर्य कामायनीमहाकाव्यं प्रणीतवान् यत्खलु निकषभूतमस्ति हिन्दीविदुषाम् । भवतु नाम, अलं निबन्धगौरवस्याधरीकरणेन मुधा-व्याख्यानैः ।

एम० ए० कक्षायां भाषाविज्ञानं विवृण्वता मयाऽहर्निशमवलोकिता कतिपयेषां हिन्द्यवतरण-मुपेयुषां संस्कृतशब्दानां रुचिकरी युगयात्रा । यथा हि तुहिनाचलशिलाखण्डानि बृहन्ति दुर्वारगिरि-नदीजलप्रवाहधर्षितानि निरन्तरमग्रेसरन्ति शोभनाकृतिचिक्कणतामुपयान्ति, शिवपिण्डतामुपगम्य ग्रामटिकासु पूजितानि भवन्ति तथैव शब्दा अपीमे भाषातो भाषामवतरन्तः सर्वथा विपरिवर्तित-कलेवरा जायन्ते । पिप्पलतरुमूले स्थापितं शिवपिण्डव्रातमवलोक्य किन्तेषां प्राक्तन-स्वरूपं कल्प-यितुं शक्यते ? अधरोत्तरं नतोन्नतं शर्करिलं बहुकोणं शङ्कुकं तिर्यक् गृहीतगर्वमन्यद्रूपं वा शिलाखण्डं कथं विशेषकवर्तुलतामुपयाति कथं वा गृहकपोतरोमराजिस्निग्धतां भजत इति सप्रयत्न-मपि नो विज्ञायते ।

कथमिति चेत् सोपपत्ति प्रस्तूयते । त्रिविक्रमशब्दं पश्यन्तु भवन्तः । विक्रमस्तावत् पादन्यासः । त्रयो विक्रमा यस्य स भगवान् वामनस्त्रिविक्रमः ।[1] भगवता वामनेन किं कृतम् ? उक्तं किमप्यन्यत् कृतञ्चान्यत् । त्रिविक्रममितां पृथिवीं बलिं याचमानेन छलिना तेन त्रिविक्रमैरेव लोकत्रयं जितम् । छलितो दैत्यराजो बलिः । अर्थापकर्षवशादयमेव शब्दः साम्प्रतं प्रवञ्चकपर्या-यतामुपगतो वर्तते । इदानीमपि अन्यदुक्त्वाऽन्यत्कुर्वाणो जनः 'तिकड़मी' ति सम्बोध्यते लोकैः । त्रिविक्रमस्तावत् 'तिकड़म' त्रिविक्रमी च 'तिकड़मी' ति हिन्दीभाषायाम् । संस्कृतशब्दा यदा प्राकृततामुपयान्ति तदा बहूनि नियमवन्ति परिवर्तनानि जायन्ते ।

प्राकृतशब्दे तु आदौ कदापि द्वित्वं ( Double Consonant ) नोपयुज्यते । भ्रंशते निर्बलमक्षरम् । 'त्रि' वर्णेऽपि रकारो निर्बलः । अतएव रकारे प्रणष्टे सति तकारमात्रमवशिष्यते । वकारोऽपि पूर्ववर्तीकारोत्तरवर्त्यकारयोर्मध्यस्थतया लोपमेति ।[2] क्रकारोऽपि स्वरभक्तिवशात् ( Metathesis ) करत्वमुपयाति । साम्प्रतं निखिलां परिवर्तनप्रक्रियां पश्यन्तु प्रेक्षावन्तः—त्रिविक्रम > तिविक्रम > तिड़क्रम > तिड़करम > तिकड़म । अनेनैव प्रकारेण 'तिकड़मी' शब्दोऽपि साधयितुं शक्यते ।

उष्ट्रपृष्ठाङ्ग शब्दं प्रस्तौम्यधुना । उष्ट्र एवैतादृशः पशुः यस्य पृष्ठांगं पृष्ठभागो वा अत्युच्चावचो भवति । मध्ये हिमगिरिशिखरायते, पुरः पश्चाच्च हस्तिनखायते । चतुरोऽप्यारोही उष्ट्रपृष्ठे स्थातुं न शक्नोति । परन्तु मानवोऽपि नाम विवेकोद्धुरः प्राणी । नो विजहाति क्रमेल-काधिराजम् । पल्यङ्कप्रयोगेण बन्धुरमुष्ट्रपृष्ठं समतलं विधाय पथयात्रां सम्पादयति ।

सहृदयजनप्रयोगयोग्यतां समुपगच्छन् उष्ट्रपृष्ठाङ्गशब्दोऽयं लाक्षणिकतामवाप । यथोष्ट्रपृष्ठाङ्गं वैषम्यवशादारोहिणं वोढुं न क्षमते तथैव कदाचित् कटुभाषिणो दुर्जनस्य कस्यचित् वक्रोक्तिरपि सरलमतिभिः सज्जनैरवगन्तुं न शक्यते । तादृशमेव वचनं सम्प्रति हिन्दीभाषायाम् 'ऊटपटांग'

---

१. पद्मनाभो मधुरिपुर्वासुदेवस्त्रिविक्रम इत्यमरः ।

२. कगचजतदपयवां प्रायो लोपः । प्राकृतप्रकाश २।२(वररुचि), प्राकृतव्याकरण १।१७७(हेमचन्द्र)

इत्युच्यते। रुचिकरीयं शब्दयात्रा। निभालयन्तु तावद्--उष्ट्रपृष्ठांग>उट्टपृष्ठांग>ऊटपृष्ठांग>ऊटपठांग>ऊटपटांग।

द्वित्वेऽपयाते सति पूर्ववर्ती स्वरो दीर्घो भवतीति नियमः। अतएव षकाररकारेऽपयाते उकारो दीर्घतामभजत। ऋकारावसानन्तु क्वचिदिकारे (यथोत्तरप्रदेशवासिनां शब्दप्रयोगे—वृक्ष = ब्रिक्ष) क्वचिदुकारे (यथा महाराष्ट्रप्रदेशवासिनां शब्दप्रयोगे--ऋतु = रुत, अमृताञ्जन = अमरुताञ्जन) क्वचिद्रकारे (यथा पश्चिमोत्तरप्रदेशदिल्लीवासिनां शब्दप्रयोगे--वृक्ष = व्रक्ष) वा जायते। अत्र तु ऋकारो रकारीभूय पश्चाद् द्वित्वनियमात्प्रणष्टः। को न खलु संस्कृतद्रोही हिन्दीवृहस्पतिर्युक्तिमिमां स्वीकरिष्यति? किन्तु का गतिः? स्वीकरणमन्तरेण नान्योऽस्त्युपायः।

निर्मीयते मया संस्कृतलोकभाषाकोषः।[1] द्विसहस्रमितानां विविधानाम् अवधीभोजपुरी-व्रजभाषादिहिन्दीशब्दानां व्युत्पत्तयो मया यथामति भाषाविज्ञाननियमाननुसृत्येदानीं यावदुपकल्पिता वर्तन्ते। यदि नामानेनाभिनवशब्दकोषेण सहृदयानां किमपि चित्तरञ्जनमभून्निश्चप्रचं साफल्य-मेष्यति ममाध्यवसायः।

पञ्चषा अपरेऽपि शब्दा प्रस्तूयन्ते। कादम्बरीकथायां श्रीमता बाणभट्टेन अन्यैश्च कथाकारैः प्रभातवर्णनप्रसङ्गं प्रस्तुवद्भिर्लिखितं—'ततः भिन्नेऽहनि' इति। भिन्ने अहनि अर्थात् दिवसे प्रस्फुटिते सति। सति सप्तम्याख्योऽयं लोकप्रियः शब्दप्रयोगो व्याकरणरूढिमेकां परिनिष्ठितां साधु अभिव्यनक्ति। परन्त्वयमेव शब्दसंयोग एकीभूय अवधीभाषाभाषिभिरेवं प्रयुज्यते—भिन्नहिंयें[2] इति। क्वचित्तु 'भिन्नहिन' शब्दः प्रयुज्यते।

विचित्रा खलु नूतनशब्दनिर्मितिपरम्परा! आश्चर्यं भवति रचनाप्रक्रियामवलोक्य। प्रक्रियाऽपीयं विविधेषु प्रान्तेषु नैकरूपा। एक एव संस्कृतशब्दः अङ्गबंगासमकलिंगान्ध्रादिप्रदेशेषु संस्कार-वशात् सद्यो विपरिवर्तते। अतोऽपि महदाश्चर्यं समुपायनीकरोमि। क्वचित्तु शब्दद्वयमात्मानं तनूकृत्य एकीकृत्य वाऽभिनवं शब्दं निर्माति। शब्दद्वयांशमिश्रणेन जायते नूतनः शब्द इत्यभिप्रायः। भाषाविज्ञाने इयं प्रक्रिया 'शब्दमिश्रण' ( Blending of words )मित्युच्यते। सोदाहरणं व्याख्यायते मया।

संस्कृतभाषायां दण्डपर्यायेषु शब्दद्वयं ख्यातिं भजते लगुड इति यष्टिरिति च। उभावपि शब्दावेकार्थकौ। परन्तु लगुडयष्टिशब्दयोः प्रथमान्तिमाक्षरसंयोगबलेनैव तृतीयः कश्चिन्नूतनः शब्दो जायते—लष्टिरिति। साम्प्रतं सरलाऽस्ति निर्माणप्रक्रिया--लगुडय>लष्टि>लट्ठि<लाठी। एवमेव आलोकयष्टि[3]>लुकष्टि>लुकाठी। लुआठी वा। ककारेऽनपगते लुकाठी, अन्यथा लुआठीशब्दः।

---

१. अस्मिन् खलु मया निर्मितप्राये संस्कृतलोकभाषाकोषे नैके शब्दा अस्मदुपाध्यायवर्यैः पूज्य-चरणैः डॉ० चण्डिकाप्रसादशुक्लमहाभागैर्व्याख्याता वर्तन्ते। यथा हि, कलघण्टिका>किलहँटा (पक्षिविशेषः) नवभाण्डम्>नौहंड़। नेवहड़ (नूतनपात्रम्) वंशवदोऽस्मि गुरुचरणा-नामेतत्कृते।

२. ऊ तौ भिन्नहियें उठि के चला गयेनि (अवधी)

३. मशाल इति भाषायाम्। तद्यथा हिन्दी-कविः कबीरदासः,

कबिरा खड़ा बजार में लिये लुकाठी हाथ।
जो घर जारै आपना चलै हमारे साथ॥

कुतोऽयं लोकभाषाप्रयुक्तः 'सांड़' शब्दः ? वृषभसंज्ञापकाः सर्वेऽपि शब्दाः प्रायेण संस्कृतमूला वर्तन्ते । तद्यथा—बली > बइल ( स्वरव्यत्ययनियमेन ) बइल्ल ( प्राकृते ) > बैल । बर्द > बरद > बरदा ( बर्दा ) । उक्षन् शब्दोऽपि वृषभार्थकः । उक्षा-उक्षाणौ—उक्षाण इति प्रथमविभक्तौ शब्दरूपम् । मन्ये उक्षाण एव अवधीभाषायाः 'साँड़' शब्दो वर्तते । आदिस्वरलोपस्तु प्राकृते भवत्येव । सम्प्रति पश्यन्तु रचनाप्रक्रियाम्—उक्षाण > क्षाण > क् + षाण > साँड़ ।

मदुपाध्यायाः केचन षण्ढशब्दात् साँड़शब्दनिर्मितिं यदाहुस्तत् चिन्त्यम् । प्रथमं तावदसामञ्जस्यमिदं यत् षण्ढशब्दः क्लीबार्थकः किन्तु साँड़शब्दो वृषभस्य कस्यचित् गर्भाधानक्षमत्वमात्रं व्यनक्ति न तावत्तस्य गोदारणकर्षणयोग्यताम् । पुनश्च षण्ढशब्दस्थितः ढकारो डकारीभवितुं कथं क्षमते ? श्रुत्वा विपश्चितः प्रमाणम् ।

उपायनोपहारशब्दौ प्रस्तौमि । उभावप्येकार्थकौ । यदि केनचित् कस्मैचित् किञ्चित् दीयते तर्हि तदुपायनं भवति । तदेवोपहारोऽपि । उपायनशब्दस्य लोकशब्दावतरणयात्रा वितन्यते मया—उपायन > पायन[1] > वायन[2] । वायन > बैना । अद्यापि नववधूत्थां पतिगृहोपगतायां नापितो नापितगृहिणी वाऽखिले ग्रामे वायनं ( बैना ) प्रददाति ।[3]

उपहारशब्दः स्वरव्यत्ययबलादात्मानं परिवर्त्य लोकभाषामंगीकरोति । आदिस्वर उकारो हकारमेति । हकारोत्तरवर्ती आकारश्च पकारमेति । एवं हि मनोविनोदकारीदं परिवर्तनं प्रतिभाति । पश्यन्तु सहृदयाः—उपहार>प + आ + ह + उ + र>पाहुर ।

सम्प्रति समाप्यते मया परिचयात्मकोऽयं लघुनिबन्धः । न मयाऽनेन निबन्धलेखनेन कश्चित् जनोऽधिक्षिप्यते । भृशमनुभूतं चित्तवैक्लव्यमेव निवेदितम्मया । येऽस्मात्मानमेव हिन्दीपक्षधरं हिन्दीभाषिणं हिन्दीरचनाकारं वा मन्ये, योऽहमस्मि च । तत् कमन्यं दूषयिष्यामि किमर्थं वा दूषयिष्यामि ? रिक्तमेव चणकान्नं झणझणायते । नाहं रिक्तचणकम् । मल्लिकाक्षवाहिनीकृपाप्रसादगर्भनिर्भरं मदन्तःकरणम् । अतएव मत्स्यापणचतुष्पथे प्रतिवादिशून्ये वा स्थाने न प्रलपामि । सत्यन्तु न कदाचित्प्रलप्यते । तत्तु लिख्यते यथाहं लिखामि--

विना देववाणीं वृथैवास्ति हिन्दी
विना देववाणीं श्लथैवास्ति हिन्दी ।
विना देववाणीं व्यथैवास्ति हिन्दी
विना देववाणीं कथैवास्ति[4] हिन्दी ॥

---

१. आदिस्वरे लुप्ते सति पायन इति ।

२. पो वः प्राकृतप्रकाश २।१५, प्राकृतव्याकरण १।२३१

३. हर्षप्रणीतरत्नावलीनाटिकायाम्—

काञ्चनमाला–आर्य वसन्तक ! एहि । साम्प्रतं त्वमपि स्वस्तिवायनं प्रतीच्छ । अंक–१ ।

४. प्रयागनगरात् सत्यकथा नाम्नी निकृष्टरुचिका युवजनपतनकारिणी काचित् पत्रिका प्रकाश्यते हिन्दीभाषायाम् ।

★

# काशिका-कौमुदीपद्धतिपर्यालोचनम्

डॉ० वैद्यनाथझा:*

व्याकरणशास्त्रेतिहासस्यानुशीलनेन समवगम्यते यदद्यत्वे समुपलभ्यमानव्याकरणेषु पाणिनीयव्याकरणमेव प्राचीनतममस्तीति, तदेतन्नाविदितं प्रायः समेषां विदुषाम् यद्यपि—

'इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः ।
पाणिन्यमरजैनेन्द्रा जयन्त्यष्टादिशाब्दिकाः ॥'

इति वोपदेपकृत 'कविकल्पद्रुम' वचनेन प्राचीनाः खल्वष्टावाचार्याः श्रूयन्ते, तथापि ग्रन्थानामध्ययनेन तेषु पाणिनेरेव व्याकरणं सर्वतः प्राचीनं प्रधानं चेति पर्यवस्यति, युक्त्या तथैव सिद्धेः । तथा हि–पाणिनि-पूर्वभवाः इन्द्राऽपिशलि-काशकृत्स्न–शाकटायनाः किल केवलं व्याकरणशास्त्रस्याऽऽचार्या आसन्, न तु तैः व्याकरणग्रन्था अपि निर्मिता इति ज्ञायते; तदीयनिर्मितग्रन्थानामस्तित्वे प्रमाणानुपलब्धेः । पाणिनिसूत्रेषु येषां शाकल्य-काश्यप-गालव-गार्ग्य-सेनकादीनामस्ति नामोल्लेखः, ते सर्वेऽपि व्याकरणग्रन्थनिर्मातार इत्यभ्युपगमो न नाम कथञ्चन न्याय्यः । 'ते एवं मन्यन्ते' इत्येवं बोधनेनापि नामोल्लेखस्य सूपपन्नत्वात् । आचार्यवसुबन्धोः प्रशिष्येण स्थिरमतेश्च शिष्येण महायानसम्प्रदायस्य विदुषा चन्द्रगोमिना निर्मितं चान्द्रव्याकरणं तु ( पातञ्जलमहाभाष्य-दोषोद्घाटनाय रचितत्वात्[1] ) पतञ्जलेरपि बहुतरपरभवमिति पाणिनेः प्रकाममर्वाचीनम् । अमरजैनेन्द्रयोः पाणिनि-परभवत्वं प्रसिद्धमेव । तदेवं पाणिनीयव्याकरणमेव सर्वतः प्राचीनमिति सिद्धयति । निरूपितं चैतद् विस्तरेण पातञ्जलमहाभाष्यस्य भूमिकायां म० म० गिरिधरशर्मचतुर्वेदेन, मयापि च संक्षेपेण 'पाणिनीयं व्याकरणमि' ति नाम्नि निबन्धे ।

तत्र भवता भगवता पाणिनिना हि चतुर्दशमाहेश्वरसूत्राण्यवलम्ब्य अष्टभिरध्यायैरुपनिबद्धानि सूत्राणि । सोऽयं ग्रन्थः 'अष्टाध्यायी' ति नाम्ना प्रसिद्धः । एषु कात्यायनेन वार्तिकानि रचितानि, पतञ्जलिना च सूत्रवार्तिकयोरुभयोर्व्याख्यानभूतं महाभाष्यं निरमायि । तत्रभवतः पाणिनेः सूत्राणामुपरि कुणि-माथुर-श्वोभूति-वररुचि-दुर्विनीत-चुल्लिभट्टादिभिर्बहुभिराचार्यैः वृत्तयो

---

* संस्कृत विभाग लंगरसिंह कालेज, बिहार विश्वविद्यालय, मुजफ्फरपुर ।

(१) द्र० वाचस्पति गैरोला महोदयस्य–'संस्कृत साहित्य का संक्षिप्त इतिहास' पृ० ३४१ ।

लिखिताः । एतेषु वृत्तिग्रन्थेषु कालक्रमेणानुपलभ्यमानेषु पतञ्जलिना लिखितं महाभाष्यम् । पतञ्जलेः पश्चात् भगवता भर्तृहरिणा भाष्यव्याख्यानं 'वाक्यपदीय'-ग्रन्थश्च निरमायिषाताम् । तदनु वामन-जयादित्याभ्याम् अष्टाध्यायीक्रमेणैव सूत्रव्याख्यानरूपा 'काशिका' प्रकाशिता । विदुषा रामचन्द्रेण व्याकरणार्णवपारगमनसेतुरूपः 'प्रक्रियाकौमुदी'ग्रन्थः, नारायणभट्टेन च 'प्रक्रियासर्वस्व' ग्रन्थो विनिर्मितः । अस्मिन् हि प्रक्रियाकौमुदीग्रन्थे प्रयोगप्रक्रियोपयोगीनि कानिचनैव सूत्राणि व्याख्यातानि, न सकलानि । तस्मादव्याख्याताखिलसूत्रत्वादनेन नोपकारभूयस्त्वमध्येतॄणां स्यादित्याकलय्य तत्र भवता भट्टोजिदीक्षितेन 'शब्दकौस्तुभः' 'वैयाकरणसिद्धान्तकौमुदी' 'प्रौढमनोरमा' च प्राणायिषत । वैयाकरणसिद्धान्तकौमुद्याः विदुषां मध्ये साम्प्रतं प्रचुरः प्रचारोऽस्ति । परमियमपि फक्किकासम्पर्केण कर्कशा समजनीति हेतोः मन्दमतीनामप्यन्तेवासिनां व्याकरणशास्त्रे प्रवेशाय भट्टोजिदीक्षितस्यैव शिष्येण विदुषा वरदराजाचार्येण 'सारकौमुदी, मध्यसिद्धान्तकौमुदी, लघुसिद्धान्तकौमुदी'–इति त्रयो ग्रन्था विनिर्मिताः । तत्रेयं लघुसिद्धान्तकौमुदी यद्यपि सरला लघुकलेवरा चावलोक्यते, तथापि सिद्धान्तकौमुदीसम्भवं सम्भवतः समस्तमावश्यकज्ञानं समासेन समुद्भावयति ।

इदमिहानुसन्धेयं यद् भट्टोजिदीक्षितेन प्रथममष्टाध्यायीक्रमेणैव सूत्रव्याख्यानरूपः 'शब्द-कौस्तुभः' निर्मितः, तथापि सरलशैल्या व्याकरणसिद्धान्तबोधाय पश्चात् 'सिद्धान्तकौमुदी' रचिता[1] । अत एवेह कौमुद्यां काशिकाक्रममुत्सृज्य सूत्राणाम्–'संज्ञाप्रकरणम्, परिभाषाप्रकरणम्, स्वरसन्धिः, व्यञ्जनसन्धिः'–इत्येवं प्रकरणक्रमेण संयोजनम् कृतम् । प्रकरणक्रमेण सुविभज्य निर्मितो ग्रन्थो हि सरल सुबोधश्च भवति–इति । परं काशिकाकौमुद्योः पद्धतेः पर्यालोचनेन प्रतीयते यदियं कौमुदी सारल्यरूपं स्वनिर्माणस्य मूलमुद्देश्यमासादयितुं न नाम समर्थाऽभवत्, प्रकरणादिकल्पनया तस्याः केवलं कलेवरः कमनीयः संवृत्तः । इतश्चिरं प्राचीनाया अपि काशिकायाः पद्धतिस्तु सर्वथा सरला सुस्पष्टा चेति । तदेतदिह परीक्ष्यते—

१—कौमुद्यां सारल्यदृष्ट्या ( मन्दमतीनामपि ज्ञानाय ) व्याख्यातुमावश्यकानामपि सूत्राणां कदाचिदुल्लेखमात्रं क्रियते, न चार्थबोधाय वृत्तिर्दीयते; कदाचिच्च वृत्तिस्थाने 'स्पष्टमि'ति लिख्यते, परं न तेन खल्वर्थो भवति स्पष्टः । काशिकायां परं प्रायशः सर्वेषां ( कौमुद्यां त्यक्तवृत्तीनामपि ) सूत्राणां वृत्तयो विलसन्ति, न च कस्यापि सूत्रस्य वृत्तिस्थाने 'स्पष्टमि'ति लिख्यते । कौमुद्याम्–'यावदवधारणे' 'सुप्प्रतिना मात्रार्थे' 'अक्षशलाकासंख्याः परिणा' 'अपपरिबहिरञ्चवः पञ्चम्या'

---

( १ ) इत्थं लौकिकशब्दानां दिङ्मात्रमिह दर्शितम् । विस्तरस्तु यथाशास्त्रं दर्शितः शब्दकौस्तुभे ॥ इति सिद्धान्तकौमुद्याः समाप्तिश्लोकेन शब्दकौस्तुभतः पश्चात् तस्या निर्माणमवगम्यते ।

—क्रमशः

## अभिनव-साहित्य-परिचयः

१—नवरसमञ्जरी, सूर्योदयकाव्यम्—सम्पादकः प्रकाशकश्च—डॉ० पी० जी० लाले, अध्यक्षः–संस्कृतविभागस्य उस्मानियाविश्वविद्यालयो हैदराबाद, आ० प्र०। आकारः––डबलडिमाई। पृष्ठानि––१८८। मूल्यम्—२५-००।

नवरसमञ्जरी श्रीयिभरायिमजगद्गुरोः शिष्येण श्रीनरहरिमहाभागेन विरचिता यस्या अलभ्यां पाण्डुलिपिमेकामादाय डॉ० पी० जी०लालेमहाभागेनाङ्गलभूमिकया सह साधु सम्पादनमकारि। ग्रन्थेऽत्र षट् उल्लासाः। प्रथमे उल्लासे जगद्गुरुवर्णनं, द्वितीयोल्लासे नायकनिरूपणं, तृतीये नायिकानिरूपणं, चतुर्थे च नायिकायाः शिरसो नखं यावद् वर्णनं, पञ्चमे रसस्वरूपव्याख्यानं तथा षष्ठे उल्लासे विविधभावानां शब्दचित्रणं व्यधायि। लक्षणोदाहरणपद्यानां संख्या पञ्चशतमिता वर्तते। अलङ्कारशास्त्रे संस्कृतसाहित्येतिहासे चास्य ग्रन्थस्यामूल्यः सहयोगो भविष्यतीति नास्ति सन्देहः। मूलमात्रप्रकाशितेऽत्र मुद्रणदोषा बाहुल्येन दृग्गोचरीभवन्ति। भाषा सरला नितान्तं हृद्या च।

चम्पूपद्धत्या लिखिते सूर्योदयनाम्नि काव्ये एकादश प्रकाशाः सन्ति। अत्र हि खण्डेश्वर्या देव्या माहात्म्यमितिहासमाश्रित्य सम्यक् प्रकाशितम्। 'आन्ध्रप्रदेश मराठी साहित्य परिषद् हैदराबाद'तः प्राप्तां पाण्डुलिपिं मूलरूपेण सम्पाद्य भक्ता अनुसन्धातारश्च भृशमुपकृता डॉ० लालेमहाभागेन। अन्ते प्रदत्तया पुष्पिकया ज्ञायते यदिदं काव्यं १७९८ तमे शके माघमासे पञ्चम्यां कृष्णपक्षे भृगुवासरे हस्तनक्षत्रे च परिपूर्णमभूत्। अनन्ततनयहरिणा लिखितेऽत्रकाव्ये देवीमाहात्म्यं तावद् मार्कण्डेयपुराणमनुसरति। यत्र तत्रालङ्कृताऽपि भाषा प्रसादगुणसम्पन्ना। ग्रन्थेऽत्र योग-तन्त्र ज्यौतिषप्रभृतिविषयाणां सन्निवेशाद् ग्रन्थकर्त्तुः पाण्डित्यमसन्दिग्धमेव चकाशते।

२—लोकप्रिय गीता—लेखकः—श्रीगोपाललाल बर्मन। प्रकाशिका––पञ्चवटी कम्पनी, भेलूपुर, वाराणसी–१। आकारः––डबल डिमाई। पृष्ठानि––१८०। मूल्यम्––२५-००।

श्रीमद्भगवद्गीताया एवाभिनवपद्धत्या लोकप्रियत्वोपपादनप्रयत्नपरिणामभूतेयं लोकप्रियगीता। न ह्यत्राष्टादशानामप्यध्यायानां सर्वे श्लोकाः प्रदत्ता न वा तेषां पृथक्-पृथक् प्रतिपादनमेव विहितं किन्तु लोकप्रियत्वं मनस्याधधता लेखकेन विशेषतो नवयुवकानां सर्वसाधारणनां स्वल्पशिक्षितनानां च कृते मूलग्रन्थस्य सुगमो हृद्यश्च पक्षः राष्ट्रभाषामाध्यमेन मनोरमनिदर्शनैः संक्षिप्योपस्थापितो येन मूलग्रन्थस्यैकतो गरिमाऽक्षुण्णोऽपरतश्च व्यवहारपक्षं प्रस्तूय ग्रन्थस्य तत्त्वं व्याख्यातम्। द्वितीय-तृतीय-द्वादशाध्यायानामेव केवलं सर्वे श्लोकाः प्रदत्ताः अन्येषान्तु यथावश्यकं स्वल्पा एव। सत्यमेवैतत्, यदि सर्वे एव श्लोका दीयेरन् तर्हि ग्रन्थोद्देश्यं तथा सफलं न स्यात्, अथ च ग्रन्थगौरवापत्तिरपि सम्भवेदेव। एतद्ग्रन्थस्य सर्वजनग्राह्यत्वाय विषयसुबोधाय च महात्मगान्धि-तिलकविनोबाभावे-डॉ०राधाकृष्णन्प्रभृतिमनीषिणां गीतासम्बद्धानि तत्तद्वाक्यान्यत्र यथावकाशं गृहीतानि।

वस्तुत एवायमभिनवो गीताग्रन्थो राष्ट्रस्य नवनिर्माणे, पतनोन्मुखनवयुवकानां समुद्धारे च किमपि नूत्नमेव साह्यमाधास्यतीति सुदृढो विश्वासः। ग्रन्थोऽयं मुद्रणादिदोषरहितः सर्वथा सुसज्जितश्चास्ति। अनया रचनया श्रीबर्मनमहाभागाः कीर्तिं प्रीतिं भगवद्भक्तिञ्च लभतामिति नः शुभकामना।

३—तिङन्तस्य सरलीकरणम्—लेखकः——डॉ० रामलखनशर्मा, महामन्त्री—उत्तरप्रदेशीयसंस्कृतसमितेः लखनऊ। आकारः——डिमाई अष्टपृष्ठात्मिका। पृष्ठानि—२०। मूल्यम्——न निर्दिष्टम्।

लघुशरीरं प्रपत्ररूपमपि इदं पुस्तकं संस्कृतस्य प्रचारप्रसारदिशाऽवश्यमेव समुपयोगि। भूमिकया प्रतीयते, यत् तिङन्तशब्दरूपसंग्रहमयमिदं पुस्तकं कस्याञ्चन गोष्ठ्यां विचाराय प्रस्तुतमासीत्। रचयित्रा श्रीशर्ममहाभागेन पाणिनिसंगृहीतेषु १९४६ संख्यकधातुष्वधुनातनसन्दर्भे व्यवहारयोग्यतया केवलमत्र ४०० संख्यका एव गृहीताः। आरम्भे २५९ संख्यकानामावश्यकसूत्राणां भ्वादिगणानुसारेण लडादिलकारानुसारेण आत्मनेपदि-परस्मैपद्यनुरोधेन च नामोल्लेखपुरस्सरं निर्देशो व्यधायि। ततश्च अकारादिक्रमेण भ्वाद्यदादिप्रभृत्तिगणप्रोक्तानां धातूनां संस्कृतातिरिक्तं हिन्द्यामर्थः लट्लकारीयप्रथमपुरुषैकवचनस्य रूपं तथा आङ्गलभाषायां तदर्थावबोधकः क्रियाशब्दश्चेति पञ्च पङ्क्तयो न्यस्ताः। यद्द्वारा प्रत्येकधातोरर्थः प्रयोगश्च सुगमतयाऽवगन्तुं शक्यते।

प्रयासोऽयं प्रशस्यः। विद्वांसश्छात्राश्च सङ्ग्रहमिमं दृग्गोचरीकृत्य सफलयन्तु स्वपरिश्रममिति निवेद्यते।

४—संस्कृतशिक्षण विधि—रचयिता——डॉ० वाचस्पतिद्विवेदी, उपाचार्यः—शिक्षाशास्त्रविभागस्य, सं० सं० वि० वि०, वाराणसी। प्रकाशकः——सुशील प्रकाशन, चौक, पटना सिटी—८, विहार। आकारः——डबल डिमाई। पृष्ठानि——१४०। मूल्यम्——६-५०।

हिन्दीभाषामाध्यमेन लिखितेऽस्मिन् ग्रन्थे सप्तदशाध्यायाः सन्ति यद्द्वारा संस्कृतस्य महत्त्वप्रतिष्ठापनेन सहैव संस्कृतशिक्षणोद्देश्यं, संस्कृतशिक्षणस्य सामान्यसिद्धान्ताः उच्चारण-व्याकरण-वार्तालाप-पठन-गद्य-कथा-द्रुतपाठ-नाटक-पद्य-लेखन-रचनानां शिक्षणदिक् सोद्धरणं निर्देशिता। लघुरपि ग्रन्थोऽयं संस्कृतशिक्षणपद्धतिं ज्ञातुकामेभ्यः नौरिव नदीं तितीर्षोः साहाय्यं विधास्यतीत्याशास्यते।

वस्तुतः साम्प्रतं संस्कृतभाषायास्तद्गतविषयाणाञ्च दुरूहत्वे सर्वजनाऽग्राह्यत्वे च दोषग्रस्ता शिक्षणपद्धतिरपि मुख्यतः कारणभूतेति बहूनां शिक्षाविदां मतम्। अतो यद्येतादृशा एव संस्कृतशिक्षणस्य हृद्याः सुगमतमाश्च विधयो नवनवोन्मेषशालिप्रतिभावद्भिः संस्कृतशिक्षणपारङ्गतैर्निर्मथ्य संस्कृतजगतः समक्षमुपह्रियेरम् तर्हि निश्चितमेव एतत्काठिन्यकलङ्कपङ्को मार्जितः स्यात्। किन्तु संस्कृतशिक्षाविदामत्र ऐकमत्यमत्यावश्यकम्, अन्यथाऽऽशालता खपुष्पायितेव सेत्स्यति।

आरम्भे सन्दर्भग्रन्थसूच्या संवलितो मुद्रणदोषवर्जितोऽयं ग्रन्थश्छात्रैः शिक्षकैश्चावश्यमेवैकदाऽवलोकनीयो मननीयश्चेति साग्रहं निवेदयता डॉ० द्विवेदिमहोदयं प्रति नैकधा शुभं काम्यते।

—विद्याधरद्विवेदी



अमृतं मधुरं सम्यक्
संस्कृतं हि ततोऽधिकम् ।



---

निखिलेऽपि महीमण्डले

संस्कृत–प्रसाराय

**'कानोडिया ओभरसीज कारपोरेशन, कलकत्ता'**

**( Kanodia oversees Corporation, Calcutta )**

इति संस्थानेन

श्रद्धा–भक्ति–प्रसूनानि विनिवेद्यन्ते

---



देवभोग्यमिदं यस्मात्
देवभाषेति कथ्यते ।

# मा पुरा जरसो मृथाः

(१)

अयं लोकः प्रियतमो देवानामपराजितः ।
यस्मै त्वमिह मृत्यवे दिष्टः पुरुष जज्ञिषे ॥
स च त्वानु ह्वयामसि मा पुरा जरसो मृथाः ॥

(२)

सं क्रामन्तां मा जहीतां शरीरं प्राणापानौ ते सयुजाविह स्ताम् ।
शतं जीव शरदो वर्धमानोऽग्निष्टे गोपा अधिपा वसिष्ठः ॥

(३)

आयुर्यत्ते अतिहितं पर चैरवानः प्राणः पुनरा ताविताम् ।
अग्निष्टदाहार्निऋ तेरुप ात् तदात्मनि पुनरा वेशयामि ते ॥

(४)

मेमं प्राणो हासीन्मो अपानोऽवहाय परा गात् ।
सप्तर्षिभ्य एनं परि ददामि त ्नं स्वस्ति जरसे वहन्तु ॥

(५)

प्र विशतं प्राणापानावनड्वाविव व्रजम् ।
अयं जरिम्णः शेवधिररिष्ट इह वर्धताम् ॥

(६)

आ ते प्राणं सुवामसि परा यक्ष्मं सुवामि ते ।
आयुर्नो विश्वतो दधद् अयमग्निर्वरेण्यः ॥

(७)

व्यवात् ते ज्योतिरभूद् अप त्वत् मो अक्रमीत् ।
अप त्वन्मृत्युं निर्ऋतिमप यक्ष्मं ति दध्मसि ॥

—अथर्ववेद त्